लघु-ग्रन्थमाला।

[ ३५ ]

पण्डितरामानन्दपतित्रिपाठिप्रणीतं

# विराड्विवरणम्




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

LAGHU-GRANTHAMĀLĀ
[35]

# VIRĀDVIVARAṆAM

of

LATE PT. RĀMĀNANDAPATI TRIPĀṬHĪ

Edited by
PROF. KARUṆĀPATI TRIPĀṬHĪ
*Ex-Vice-Chancellor*
*Sampurnanand Sanskrit Vishvavidyalaya*
&
**President**
*Uttar Pradesh Sanskrit Academy*



SAMPURNANAND SANSKRIT VISHVAVIDYALAYA
VARANASI
1982

Published by
DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ 'VĀGĪŚA ŚĀSTRĪ'
Research Publication Supervisor,
Sampurnanand Sanskrit Vishvavidyalaya.

Available at—
**Sales Department**
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi-221002.

First Edition—1000 copies
Price Rs. 3.50

*Printed at—*
Tara Printing Works
Varanasi.

लघु-ग्रन्थमाला

[ ३५ ]

पण्डितरामानन्दपतित्रिपाठिप्रणीतं

# विराड्विवरणम्

सम्पादकः

प्रो० करुणापतित्रिपाठी

भू० पू० कुलपतिः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
एवम्
अध्यक्षः,
उत्तरप्रदेश-संस्कृत-अकादमी

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी

२०३८ तमे वैक्रमाब्दे  १९०३ तमे शकाब्दे  १९८२ तमे खैस्ताब्दे

# प्रास्ताविकम्

चिज्जडात्मकेऽस्मिन् विश्वे विज्ञायते तत्त्वद्वयम्--१. चेतनम्, जडं चेति। चेतनं नाम सच्चिदानन्दमयम्, जडं तु नामरूपात्मकमेव। एवं तावत् कार्यद्वयस्यास्य कारणद्वयं नूनं पार्थक्यशो वेदितव्यम्। चेतनस्य कारणं विश्वरूपं सच्चिदानन्दमयं चेतनम्, जडस्य च जडात्मिका प्रकृतिः। सा चाव्यक्त-उपाधि-महद्ब्रह्म-प्रधान-प्रकृतिप्रभृतिभिरभिधानैरभिधीयते शास्त्रेषु। जडात्मिका प्रकृतिश्चेतनवैकल्यान्न प्रभवति स्रष्टुं जगदिदं निखिलम्। पुरुषसन्निधानमवाप्य तस्यां स्पन्दनं सञ्जायतेऽयस्कान्तमणिसन्निधानमवाप्नुवति निश्चेतनेऽयसीव। प्रथमतो महत्तत्त्वविस्तारकत्वादव्यक्तं महद्ब्रह्मेति समुदीर्यते। तत्रैव गर्भाधानस्थानेऽव्यक्ते विश्वात्मना परमात्मना बीजमुप्यते। ततः समुत्पद्यते सकलं ब्रह्माण्डम्। तदुक्तं श्रीमद्भगवद्गीतायां (१३।३) भगवता श्रीकृष्णेन—

मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्।
सम्भवः सर्वभूतानां ततो भवति भारत॥ इति।

एवमेव तत्रान्यत्रापि 'प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया' इत्यादीनि विराजन्ते बहूनि वचनान्युक्तार्थप्रपोषकाणि। एवं खलु तमःप्रधानविक्षेपशक्तिमदज्ञानोपहितचैतन्यात् तादृशः सूक्ष्म आकाशः, आकाशात् स्थूलो वायुस्तस्मात् स्थूलतरोऽग्निः, तस्माच्च स्थूलतमा आपस्ततस्तु पञ्चज्ञानेन्द्रियवेद्या प्रथिष्ठा पृथिवी चेति समुत्पद्यन्ते क्रमशः। सृष्टिक्रमोऽयं पिण्डे ब्रह्माण्डे चोभयत्र चिज्जडात्मकं सादृश्यं भजते। जगत् सृष्ट्वा तत्रैवानुप्राविशत् सच्चिदानन्दरूपो भगवान्—'तत् सृष्ट्वा तदेवानुप्राविशत्' (तैत्तिरीयोप० २,६,१) इति। येन क्रमेण जगदाविर्भवति, तेनैव क्रमेण लयमपि व्रजति। यथा श्रीमन्महाभारते (१२।३३९।२९-३१)—

जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते।
ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते॥
खे वायुः प्रलयं याति मनस्याकाशमेव च।
मनो हि परमं भूतं तदव्यक्ते प्रलीयते॥
अव्यक्तं पुरुषे ब्रह्मन् निष्कले सम्प्रलीयते।
नास्ति तस्मात् परतरः पुरुषाद् वै सनातनात्॥ इति।

तस्यास्य सृष्टिकारणस्य परमात्मनः प्राप्तीहया विभिन्नाभिः साधनासरणिभिर्धार्मिकोत्तंसाः सोपाधिकं सगुणं निरुपाधिकं च निर्गुणमखिलब्रह्माण्डनायकं विश्वात्मानं तमुपासते विवदन्ते च मिथोऽखिलाः। आत्मानमाविर्भाव्य वस्तुतो दृश्यमानचराचरतया स स्वयमेव समुपतिष्ठते विश्वात्मा। तदुक्तं श्रीमद्भगवद्गीतायाम् (१५।१२-१४)—

यदादित्यगतं तेजो जगद् भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत् तेजो विद्धि मामकम्॥
गामाविश्य च भूतानि धारयाम्यहमोजसा।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः॥
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः। इति।

तत्रैकादशाध्याये यद् विश्वरूपात्मना स्वात्मदर्शनं कारयामास भगवान् श्रीकृष्णोऽर्जुनम्, तत् परमात्माभिन्नमेवेत्यलं प्रत्यभिज्ञानाय—

तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा।
अपश्यद् देवदेवस्य शरीरे पाण्डवस्तदा॥
अनादिमध्यान्तमनन्तवीर्यम्,
अनन्तबाहुं शशिसूर्यनेत्रम्॥ इति।

'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् स भूमिं सर्वतः स्पृत्वात्यतिष्ठद् दशाङ्गुलम्। पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यम् ...... चन्द्रमा मनसो जातः, चक्षोः सूर्योऽजायत। श्रोत्राद् वायुश्च प्राणश्च मुखादग्निरजायत।........ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः, ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत।' 'नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत। पद्भ्यां भूमिर्दिशः श्रोत्रात् तथा लोकां अकल्पयन्॥' इति शुक्लयजुर्वेदसंहितायाः पुरुषसूक्ते विराट्पुरुषो निरूपितः। 'ततो विराडजायत विराजोऽधिपूरुषः' इति प्रतिपदोक्तो विराट्शब्दोऽपि तत्रैव।

यद्यपि साम्प्रदायिकविवादानामपनोदनाय सम्राजा प्रथितयशसाऽकबरेण बहुजनहिताय सर्वधर्मसमन्वयात्मकं 'दीन-इलाही' इति मतं प्रवर्तितम्, तथापि शास्त्रसम्पोषितत्वाभावान्न तत् प्रचारमासदत्। अकबरस्य सा समुदारा भावना दाराशिकोहं यथानुवंशमनुप्राप्ता मूर्त्तरूपेति शक्यते वक्तुं ध्रुवम्। धर्मशास्त्रे दर्शनशास्त्रे च स्वकीयं गुरुं तदानीन्तनविद्वज्जनचूडामणिं वाराणसेयं पण्डितश्रीरामानन्दपतित्रिपाठिमहोदयं प्रार्थयामास मानवकृतमतमतान्तरासंस्पृष्टाय परमात्मस्वरूपवर्णनाय। सकलशास्त्रनदीष्णैः पदवाक्यप्रमाणपारावारीणैस्तैः 'विराड्विवरणम्' नामायं शास्त्रसम्मतोऽभिनवो ग्रन्थो व्यरचि। मन्ये, ग्रन्थस्यास्य रचनोत्तरं दाराशिकोहो नचिरादेव व्यापादितस्तदनुजेनेति ग्रन्थ एष प्रचारपदवीं नारूढः।

प्रणेत्रा विराड्विवरणस्य श्रुतिसम्मतत्वमादावेव मङ्गलश्लोके प्रतिपादितम्—'तस्यैव धारणारूपं निरूप्यते श्रुतिसम्मतम्' इति। विश्वं व्याप्य समवस्थितस्य विराट्पुरुषस्य निरूपणमिह सूत्राणामष्टसप्तत्या विहितम्। प्रतिसूत्रं स्वोपज्ञवृत्तिरपि विरचिता विलसति। तत्र वेदवेदान्तपुराणस्मृतियोगतन्त्रादिग्रन्थानां प्रमाणानि यथाप्रसङ्गमुपन्यस्तानि सन्ति ग्रन्थकृता। कस्याश्चिद् रमण्या नखशिखान्तवर्णनेन स्वरूपसाक्षात्कारसौविध्यमिवेहापि विश्वरूपस्य विराट्पुरुषस्य पादतल-पादोपरिभाग-पादाङ्गुलिचरणनख-गुल्फभाग-जङ्घा-जानु-ऊरु-गमनक्रिया-पायु-इन्द्रिय-वृषण-मेढ्र-वीर्य-जघन-श्वासः-

नाभि-जाठराग्नि-नाडी-उदर-क्षुत्-तृट्-वक्षः-स्तन-हृदय-मनः-सत्त्व-कोप-प्रसाद-ज्ञान-प्राण-पृष्ठभाग-पृष्ठदण्ड-अस्थि-कररेखा-कराङ्गुलि-करनख-कर्म-स्कन्ध-ककुद्-ग्रीवा-नाद-वदन-चिबुक-अधर-उत्तरोष्ठ-दन्त-दंष्ट्रा-तालु-जिह्वा-रसना-वाग्-हास्य-जृम्भा-गल्ल-कर्ण-नासा-घ्राण-निःश्वसित-चक्षुः-निमेषोन्मेष-कटाक्ष-भ्रू-ललाट-शिरः-केश-ब्रह्मरन्ध्र-तनूरुह-शरीर-शोभा-देहरन्ध्र-आत्म-निवास-भोगानामुद्गाढं विद्यमानपुरुषस्येव नखशिखान्तं मूर्त्तिमद् वर्णनं सर्वसम्प्रदायजनहिताय सम्पत्स्यत इति प्रत्येमि ।

ग्रन्थकारवंशजानां विद्वन्मूर्द्धन्यानां श्रीनारायणपतित्रिपाठिमहोदयानां जागरूकतया विराड्विवरणमेतद् रक्षितं सत् संस्कृतवाङ्मयशेवधिसंवर्धनाय प्रभवति । सामान्यजनोपकारकामनया तैर्महानुभावैः सूत्रसंख्यापरिमितैरेव भाषापद्यैर्निपुणं सन्दृब्धो विषयः, कविकुलकथापरिचयात्मिका विस्तृता भूमिका च न्यबन्धि १९८६ तमे वैक्रमाब्दे । तत्र कविकृतमविकलं साहित्यमुपवर्णितम् ।

तेषामात्मजैरन्वर्थनामभिरस्य विश्वविद्यालयस्य कुलपतिपदं विभूषितवद्भिः पण्डितश्रीकरुणापतित्रिपाठिमहोदयैर्विराड्विवरणमेतद् आधुनिकसम्पादनसरण्या विविध-परिशिष्टसम्मण्डितं तथा कुशलं समपादि यथा ग्रन्थगता विषया मुकुरवत्प्रतिबिम्बिताः स्युः पाठकानाम् । पण्डितशिरोमणिना श्रीरामानन्दपतित्रिपाठिना कृतस्य समुपलब्धस्य स्तोत्रषट्कस्यैकत्रैव सौलभ्यं स्यादिति धिया सम्पादकप्रवरैः खिलतयाऽविकलमखिलं संयोज्य महानुपकारो व्यधायि जिज्ञासूनाम् । विराड्विवरणस्थसूत्राणां वर्णानुक्रमसूची, स्वोपज्ञवृत्तावुद्धृतानां ग्रन्थानां ग्रन्थकृतां च नाम्नां सूची पृष्ठाङ्कोल्लेखपूर्वकमुपन्यस्ते । इत्थं कलेवरेण कनीयानपि गुणगणेन महीयानयं ग्रन्थमणिर्लघुग्रन्थमालायाः पञ्चत्रिंश-प्रसूनतया समुद्भासितो नूनं समावर्जयेद् विद्वज्जनचेतांसि समुद्भासयेच्च जिज्ञासु-जनस्वान्तनिशान्तानीति बाढं प्रत्येति

| | |
|---|---|
| वाराणस्याम्<br>महाशिवरात्रौ २०३८ वै०<br>(२२-२-८२ चन्द्रवासरे) | भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'<br>निदेशकः<br>अनुसन्धानसंस्थानस्य |

# पुरोवाणी

जानन्त्येव तत्रभवन्तः श्रीमन्तो भारतीयपुराशास्त्रतत्त्वज्ञाः शास्त्रज्ञा यदस्मिन् खलु भारते वर्षे प्रागैतिहासिककालादेव सरस्वतीसमुपासकाः, सारस्वतसाधनासमुत्सुकमानसा बहूनि लघूनि महान्ति च पुस्तकानि, स्तोत्राणि, काव्यानि, काव्यालोचनग्रन्थप्रधानानि दर्शनविचारबहुलानि वाङ्मयानि कुर्वन्नासन्, कुर्वन्ति चाद्यापि।

अत्र यस्य मदीयपूर्वपुरुषस्य विषये काश्चन पङ्क्तयः पुरोवाणीरूपेण निवेदयामि, तस्य विविधविद्याचमत्कारपारङ्गतस्य, असाधारणवैदुष्यपुष्टस्य विदुषो विषयेऽस्मत्पितृचरणाः साहित्यपुराणादिचिन्तनतत्पराः 'कविकुलकथा' इति शीर्षकमादायैकं विस्तृतं वैदुष्यकृतिविषयकं परिचयमङ्कितवन्तः। प्रकाश्यमानलघुग्रन्थविराड्विवरणस्य निर्मातारो मधुकरतनयाः, सरयूपारीणब्राह्मणधुरीणाः श्रीरामानन्दपतित्रिपाठिनः सन्ति। एभिर्निर्मितः 'रसिकजीवनम्' इत्याख्यो लघुग्रन्थोऽस्यामेव सारस्वतसुषमायां ३० वर्षे १-२ तमे अङ्के मदीयपरिचयात्मकप्रस्तावनासमुपेतः प्रकाशितो वर्तते।

इमे खलु महापण्डिता रामानन्दसूरयो भारतसम्राजः शाहजहाँनराज्ञः काले काश्यां संस्कृतपण्डितमण्डलीषु देदीप्यमाना आसन्। एषां विषये कुलकिंवदन्त्यनुसारेण विज्ञायते यत् शाहजहाँनज्येष्ठपुत्रस्य शाहदाराशिकोहस्य बहुधा काश्यामागमनं भवति स्म।

अवगच्छन्त्येव सर्वे यत् शाहदाराशिकोहः संस्कृतविदुषां समाराधकः, संस्कृतविद्यानुरागी, स्वयं च संस्कृताध्येताऽऽसीत्। तस्य मित्रेषु महापण्डिता रसगङ्गाधरकाराः, भामिनीविलासाद्यनेकग्रन्थनिर्मातारः, पण्डितपुङ्गवाः पण्डितराजजगन्नाथा दाराशिकोहस्य निकटवर्तिन आसन्।

तस्मिन् विषये बह्व्यो जनश्रुतयः प्रख्याताः सन्ति। जनश्रुत्यां च कथ्यते यद् दाराशिकोहसंसर्गेण पण्डितराजाः कयाचित्परमरूपलावण्यवत्या नवनीतकोमलाङ्ग्या यवन्या सह समुद्वाहं कृतवन्तः। अन्तकाले च प्रायश्चित्तरूपेण काश्यां पञ्चगङ्गाघट्टोपरि सोपाने समुपविश्य गङ्गालहरीनामकमपूर्वसाहित्यलालित्यसुभरं गङ्गास्तोत्रं प्रणीतवन्तः।

तत्रैका किलोक्तिरपि प्रसिद्धा वर्तते—

सुरसरि मुनिकन्ये तारयेत्पुण्यवन्तं<br>
स तरति निजपुण्यैस्तत्र किन्ते महत्त्वम्।<br>
यदि हि यवनजातां तारयेत्पापिनीं मां<br>
तदिह तव महत्त्वं तन्महत्त्वं महत्त्वम्॥

अस्तु, कुलकिंवदन्त्यनुसारेणेदमपि श्रूयते यद् दाराशिकोहेन सहास्माकं पूर्वपुरुषस्य रामानन्दसूरेः मैत्री समुद्भूता। पितृचरणेन लिखितं वर्तते यद् यदा शाहदाराशिकोहः काशीमागच्छति स्म, तदा तं रामानन्दपण्डितः संस्कृतमध्यापयति स्म। बादशाह-औरङ्गजेबस्य गोहत्या-मन्दिरध्वंसादिविषये शाहदाराशिकोहस्य

कष्टप्रदप्रवृत्तिविषये च शोकोद्गारविषयका केचन श्लोका संस्कृतभाषायां लिखिताः कविकुलकथायां समुद्धृताः सन्ति।

अयं च 'विराड्विवरणम्' इत्याख्यो लघुग्रन्थ एकतश्च शास्त्रीयमहत्त्वशाली, अपरतश्चैतिहासिकमहत्त्वशाली। शास्त्रीयमहत्त्वविषये तु मम किञ्चिदपि निवेदनं साहसमात्रमेव भविष्यति। शास्त्रतत्त्वज्ञाः सुधियः स्वयमेव तन्निर्णेष्यन्ति। ऐतिहासिकमहत्त्वं चास्य ग्रन्थस्य पुष्पिकावचनेन प्रमाण्यते। तद्यथा—"इति श्रीनित्यातिशयषडैश्वर्यसम्पन्नश्रीशाहबिलंद-इकबालमहम्मद्दाराशिकोहसर्वप्राणिपुञ्जप्रकर्षप्रोद्भूतसत्सन्तानाखण्डमण्डलधरणिधरनियुक्तश्रीमद्रामानन्दसूरिणा विरचितं 'विराड्विवरणम्' सम्पूर्णम्। संवत् १७१३ वैशाखे मासि, शुक्लपक्षे त्रयोदश्यां शनौ॥ शुभम्॥"

अन्यच्च, दाराशिकोहविषयक-औरङ्गजेबकृतनिष्करुणयातनापूर्णव्यापारं दर्शं दर्शं करुणागलितहृदयेन कातरमनसा श्रीरामानन्दसूरिणा व्यथामयी श्लोकचतुष्टयी प्राणायि। सा 'कविकुलकथायाम्' समुद्धृताऽस्ति, सहृदयपाठकैरवश्यमेव पठनीया[1]।

इदमपि कुलपरम्परया तत्प्रणीतसाहित्येन च प्रत्यभिज्ञायते यदस्मै मित्रस्थानीयाय पण्डितरामानन्दसूरये दाराशिकोहः 'विविधविद्याचमत्कारपारङ्गतः' इत्युपाधिं समर्पयत्। वशीकृतसमुद्रवलयाया धरण्या दिल्लीनृपेण दाराशिकोहेन य उपाधिः श्रीरामानन्दसूरये प्रायच्छत्, सः खल्वेतत्कृतग्रन्थविवरणदर्शनेनापि सत्याप्यते। सत्यमेवायं कविर्मनीषी न केवलं विविधविद्याचमत्कारपारङ्गत एवासीत्, अपि तु नानाशास्त्रपारङ्गतः सन् प्रौढग्रन्थरचनानिपुणोऽप्यभवत्। विभावयन्तु किलात्र सुधियो यन्नासन् तदानीं साम्प्रतमिव सुसमृद्धाः पुस्तकालयाः, तदपि सूरिणैतेन प्राणायि विविधशास्त्रवचनपुरस्कृता व्याख्या। एतेन विभाव्यते यत् सूरेस्तस्य पार्श्वे आसीत् सुविपुलो ग्रन्थालयः, आहोस्वित् अतिशयशास्त्राभ्यासजन्यमासीदेतादृशं चतुरस्रं पाण्डित्यं तस्य। कविकुलकथायामुद्धृतस्तोत्राणां ग्रन्थतालिकादिदर्शनेन विराड्विवरणे प्रमाणरूपेण समुद्धृतग्रन्थशीर्षकैश्चैतत् तथ्यं प्रमाण्यते।

यद्यपि पितृचरणजीवनकालपर्यन्तं सुरक्षिता ग्रन्था अस्माकमकर्मण्यतयोपेक्षया देवकुकृपया च संप्रति विनष्टा जातास्तथापि कानिचिन समुपलब्धानि स्तोत्राण्यस्य लघुग्रन्थस्यान्तिमभागे प्रकाश्यन्ते।

अत्र च या कविकुलकथा मदीयपूज्यतातपादेन अधुना अप्राप्येण विराड्विवरणग्रन्थेन सह हिन्दीभाषयां मुद्रापिताऽऽसीत्, सा कथाऽपि पूर्णपरिचयाय काशीखण्डहिन्दीभाषानुवादकर्तुर्महिम्नस्तोत्रपञ्चमुखीटीकादिनिर्मातुश्च पण्डितवर्यनारायणपतित्रिपाठिनो हिन्दीभाषालेखननिदर्शनरूपेण प्रकाश्यते।

---

१. द्रष्टव्या—कविकुलकथा, पृ० ७।

अस्य 'विराड्विवरणम्' इत्याख्यग्रन्थकारस्य विविधविद्याचमत्कारपारङ्गतत्व-विषये किञ्चिद् निवेद्यते। अनेन लिखितानि पूर्णापूर्णानि चतुस्त्रिंशत् स्तोत्राण्यासन्। 'वेदार्थसङ्ग्रहः' इत्याख्यो लघुग्रन्थश्च प्रचलितानां केषाञ्चन मन्त्राणां सामान्यार्थविषयको वर्तते स्म। 'सिद्धान्तकौमुद्याः' अपूर्णा टीका 'तत्त्वदीपिका' आसीत्। तर्कगुम्फणायां न्यायवैशेषिकविषयकस्य तर्कसङ्ग्रहाख्यप्रसिद्धग्रन्थस्य ललितपद्यान्तरं कृतं वर्तते स्म।

संस्कृत-हिन्दीभाषयोर्लिखितो वैद्यकविषयको कश्चन खण्डितो ग्रन्थः, फलित-ज्योतिषविषयकः कश्चनापूर्णः खण्डितो ग्रन्थः 'निर्णयार्णवः' नाम सामान्यरीत्या तिथि-पर्वणां सप्रमाणो निर्णायकश्च ग्रन्थ आसीत्। सिद्धान्तज्योतिषविषये स्वतन्त्रग्रन्थाभावेऽपि कानिचन जन्माङ्गानि समुपलब्धानि। तत्र चैकं जन्माङ्गं भारतसम्राजः शाहजहाँननृपतेः खुर्रमसुलतानेति नाम्ना निर्मितमासीत्। यस्य चोद्धरणं मया काशीहिन्दूविश्वविद्यालये सम्पन्ने प्राच्यविद्या-(ओरियण्टल कान्फ्रेंस)-सम्मेलने एकस्मिन् निबन्धे समुपस्थापितम्।

वैदिककर्मकाण्डविषयेऽनेके पूर्णापूर्णा ग्रन्था आसन्। तेषां नामानि यथा—१. सटीका विवाहपद्धतिः, २. षोडशक्रियानुक्रमः, ३. आरामोत्सर्गः, ४. जलाशयोत्सर्गादिश्च। एषु च षोडशक्रियानुक्रमः पूर्णो ग्रन्थ आसीत्।

कोशविज्ञानसम्बन्धि 'लिङ्गानुशासनम्' नामकं पुस्तकमप्यासीत्। तस्य ग्रन्थस्य च टीका रामानन्दसूरिकृतैवासीत्।

तन्त्रशास्त्रम्—तन्त्रशास्त्रविषये विशिष्टश्रद्धाभाग्भिः रामानन्दसुधीभिस्तन्त्रविषय-काणि कानिचन स्तोत्राणि विरचितान्यासन्। येषु च 'श्यामास्तवराजः' सहैवानेन ग्रन्थेन प्रकाश्यते। एतादृशेषु स्तोत्रेषु—१. आद्यास्तवराजः, २. 'श्यामास्तवराजः', ३. 'बगलामुखीस्तवराजः', ४. 'पञ्चतत्त्वसपर्या,' ५. 'आकाशवासिनीसपर्या', प्रभृतीनि स्तोत्राणि 'असितादिविद्यापद्धतिश्च' तान्त्रिकरीत्या लिखितानि सम्पूर्णान्यासन्। एवमेव च 'कालरात्रिविधानम्', 'गुह्यषोढाविवरणम्' प्रभृतीन्यपि।

साहित्यविषये रामानन्दसूरिविरचितं 'रसिकजीवनम्'[1] पूर्वमेव प्रकाशितम्। 'पद्यपीयूषम्' इत्याख्यं सङ्ग्रहात्मकं लघुपुस्तकमासीत्। 'रामचरितम्' अपि तेन लिखितमासीत्, यस्मिन् खलु 'दोहा—चौपाई' प्रभृतितात्कालिकप्रचलितच्छन्दःसु संस्कृत-भाषामाध्यमेन वाल्मीकिरामायणस्य संक्षिप्तं वर्णनमुल्लिखितम्। तेन सुन्दरकाण्ड-कथाऽपि प्रणीता। अन्येषां च साहित्यिग्रन्थानां नामानि खलु—१. कटाक्षशतकम्, २. धन्यशतकम्, ३. शशाङ्कशतकञ्चेत्यादि।

'हास्यावतारः' नाम प्रहसनलघुग्रन्थोऽपि तेन प्राणायि, यः खल्वैतिहासिकदृशा महत्त्वं भजते। अस्मिन् हि यवनानामत्याचारवर्णनं कृतं वर्तते। तथा हि—

---

१. द्रष्टव्यो—सारस्वतसुषमायाः ३० व० १—२ अङ्कौ।

हन्यन्ते निर्निमित्तं सकलसुरभयो निर्दयैर्म्लेच्छजातै-
र्दाय्यन्तेऽमी सदेवाः सकलसुमनसामालयाश्चातिदीर्घाः ।
पीड्यन्ते साधुलोकाः कठिनतरकरग्राहिभिः कामचारैः
प्रत्यूहैस्तैः क्रतूनां सभयमिव जगत्पामराणां कुमारैः ॥ इति ।

अन्यच्चापि 'काशीकुतूहलम्' अपेक्षाकृतबृहत्पुस्तकम्; परन्त्वाद्यन्तहीनं खण्डितं लभ्यते स्म । एवमेव सप्तदशकुतूहलानामुल्लेखो हिन्दीकविकुलकथायां कृतो वर्तते । एतदन्तर्गतपञ्चक्रोशकुतूहले तात्कालिकपञ्चक्रोशयात्रासम्बन्धिन ऐतिहासिकवृत्तस्योल्लेखोऽवर्त्तत ।

एभी रामानन्दसूरिभिः किरातार्जुनीयस्यापि 'किरातभावार्थदीपिका' इत्याख्या टीका निर्मिताऽऽसीत् ।

अपरश्चैको विशिष्टः काव्यप्रकाशप्राकृतार्थाख्यः प्रत्येकोल्लासान्तर्गतप्राकृतपद्यानां संस्कृतार्थबोधकः सम्पूर्णग्रन्थ आसीत्, सोऽप्यनुपलब्धः ।

विदुषाऽनेन हिन्दीभाषायामपि कवित्तच्छन्दसि ऋतुरचनाविषयकाणि, शान्तरसविषयकाणि च गेयपद्यानि विनिर्मितानि ।

एतेनोपर्युक्तेन संक्षिप्तविवरणेनैतस्य महापण्डितस्य कविधुरीणस्य 'विविधविद्याचमत्कारपारङ्गतोपाधिः' सर्वथा समुपयुक्तः, निर्भ्रान्तः निर्विवादश्च प्रमाण्यते ।

एतत्सर्वं मया पूज्यपितृचरणलिखितानुसन्धानपूर्णकविकुलकथाशीर्षकनिबन्धमधिकृत्य शास्त्ररसिकानां पुरतो निवेदितम् ।

सन्दर्भेऽस्मिन् सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपतिपदं विभूषयद्भ्यो ममाग्रजकल्पेभ्यः संस्कृत-संस्कृतिसमाराधनबद्धपरिकरेभ्यः श्रीगौरीनाथशास्त्रिमहानुभावेभ्यः सादरं धन्यवादान् समुपाहरामि—येषां हि प्रोत्साहनेन प्रेरणया च ग्रन्थोऽयं प्राकाश्यतामभजत् ।

एतस्य लघुग्रन्थस्य लघुग्रन्थमालायां प्रकाशनाय स्वीकृतिप्रदानेनोपकुर्वन्तो डॉ० भागीरथप्रसादत्रिपाठिमहोदया 'वागीशः शास्त्री' इत्युपनामका मदीयानुजतुल्यस्नेहभाजो भूरिशः साधुवादार्हाः । अस्य सम्पादने, प्रकाशने, मुद्रणे च यादृशं साहाय्यं डॉ० हरिश्चन्द्रमणित्रिपाठिना प्रदत्तम्, तदर्थं तस्मै भूयो भूयः संस्कृतसेवातत्परमानसाय मच्छिष्यसंकाशायाशीर्वादं वितरामि । अन्ते च सम्पूर्णानन्दसंस्कृतविश्वविद्यालयं प्रति लघुग्रन्थस्यास्य प्रकाशनार्थं कृतज्ञतां ज्ञापयामि ।

वसन्तपञ्चम्याम्
वै० सं० २०३८
१९८२ ख्रैस्ताब्दे

संस्कृतविदुषां वशंवदः
त्रिपाठिकरुणापतिः

# विषयानुक्रमणी

• • •

श्रीशी वन्दे

# कविकुल-कथा

❀ ❀ ❀

'ईश्वरः सर्वभूतानाम्' ईश्वर की सत्ता मानने वाले आस्तिक और नहीं मानने वाले ही नास्तिक कहे जाते हैं। आज भी संसार में आस्तिक ही विशेष हैं, नास्तिकों की संख्या नगण्य है। हिन्दू, मुसलमान, कृस्तान आदि कोई हों, सभी ईश्वरवादी हैं। अनीश्वरवादी किसी मत अथवा सम्प्रदाय के नहीं हैं। उन लोगों का तो 'मुरारे-स्तृतीयः पन्थाः' है। हाँ मनुष्य अवश्य ही हैं। इनमें किसी को कुछ कहना नहीं है और न उन लोगों से हमें यहां कोई प्रयोजन ही है।

अस्तु, जो लोग इश्वरवादी हैं, उन लोगों में भी इतने मतभेद हैं कि यदि सबकी गिनती की जाय तो हजारों की संख्या हो सकेगी, फिर भी समस्त भूमण्डल में ईश्वरवादियों में भी 'ईश्वर को निराकार अथवा साकार अर्थात् निर्गुण या सगुण दोनों ही रूप से माननेवाले लोगों के मत अपने-अपने धर्मग्रन्थों के विचारानुसार पृथक्-पृथक् प्रचलित हैं। इस भारतवर्ष में सब दिन से धर्म की प्रधानता रही है, आज भी धर्मभेद होने ही से यह प्रसिद्ध पवित्र कर्मभूमि छिन्न-भिन्न हो रही है। इसी में समस्त देशवासी उथल-पुथल हो रहे हैं।

यद्यपि अनेक धर्म-उपधर्मों में असंख्य मत-मतान्तरों की सृष्टि से बड़े-बड़े सम्प्रदायों का आविर्भाव हुआ है और आज दिन भी नये-नये रूपों से प्रकट हो रहा है, तथापि ईश्वर की सत्ता पूर्ववत् सर्वत्र ही छायी हुई है। उसमें किसी प्रकार का अन्तर दृष्टिगोचर नहीं होता है। ऐसी दशा में जो लोग निर्गुण ब्रह्म के मानने वाले हैं, उन लोगों के उच्च विचारपूर्ण ज्ञानों से यद्यपि हम लोगों के वेद, वेदान्तादि दर्शनों में बहुतेरे ग्रन्थ भरे पड़े हैं, पर उनसे साधारण बुद्धि-विचारवालों का मन सन्तुष्ट नहीं हो सकता। कारण उतनी धी-सम्पत्ति उनके पास नहीं है। अत एव उन लोगों को सगुण ब्रह्म ही का शरण ढूंढ़ना पड़ता है। इस प्रकरण को गोस्वामी तुलसीदास जी ने अपने भू-प्रसिद्ध रामायण के बालकाण्ड में कागभुसुण्डि जी की कथा में बड़ी मनोरंजक वाणी में प्रकट कर दिया है—जिसका सार केवल—'एक दारुगत देखिय एकू, पावक जुगसम ब्रह्म विवेकू।'

इस एक ही वाक्य से प्रकट हो जाता है—ऐसी दशा में जो दारुगत आग है वह तो किसी प्रकार से नहीं दिखायी पड़ सकती, परन्तु जो दृष्टि पथ में आती है, उसी से अदृश्य का भी ज्ञान होता है। इस ग्रन्थ में इसी विषय का स्पष्टीकरण

श्रुति-स्मृति-पुराण-दर्शन-योगवासिष्ठ आदि अनेक प्रामाणिक प्राचीन ग्रन्थों से प्रमाणों को उद्धृत करके दिखलाया गया है कि सगुण ब्रह्म ही यह संसार है, इस विश्व से भिन्न कोई दूसरा ब्रह्म नहीं है। अत एव उस ब्रह्म का नाम विश्वरूप है। उसी 'विराट् रूप' का इस ग्रन्थ में विवरण किया गया है। अतः इस ग्रन्थ का नाम 'विराड्-विवरणम्' ही अपना उद्देश्य प्रकट कर देता है, फिर भी कुछ भूमिका लिखना केवल आधुनिक प्रथा का परिपालन ही करना है।

जो हो, यह ग्रन्थ संवत् १७१३ वैशाख कृष्ण त्रयोदशी (१३) शनिवार को समाप्त किया गया है और इसकी इतिश्री में भारत के प्रसिद्ध सम्राट् अकबर के प्रपौत्र जहाँगीर के पौत्र और शाहजहाँ के ज्येष्ठ पुत्र दाराशिकोह का नाम उल्लिखित किया गया है[1]। कुल के वृद्ध लोगों से ऐसा सुना गया है कि जब दाराशिकोह काशी में वेदान्तशास्त्र का अध्ययन करने के लिए आये थे, तो उस काल की सभाओं में प्रथम पूज्य पण्डित रामानन्द पति त्रिपाठी जी से मिले थे और उनके सत्समागम से बहुत सन्तोष लाभ किया था। हिन्दूशास्त्र-भक्त दाराशिकोह के कहने पर पण्डित जी ने इस ग्रन्थ को लिखा था। इसी से 'नियुक्त' पद की योजना की गयी है। इसकी मूल प्रति आज तक मेरे पास वर्तमान है[2]; परन्तु उसकी और इन्हीं बाबा रामानन्द जी के बनाये हुए नायिका भेद के 'रसिकजीवनम्[3]' नामक ग्रन्थ को, जिस पर मेरा बनाया हुआ हिन्दी में पद्यानुवाद भी है। आरा जिले के केसठ गाँव के जमींदार वेंकटेश प्रसाद सिंह मुझसे देखने के लिए मंगनी माँग कर ले गये। बहुत दिन बीतने पर भी जब पुस्तक उन्होंने नहीं लौटायी, तो मुझे लाचार होकर उनसे मिल कर माँगना पड़ा, पर उन्होंने मुख चेष्टा विकृत करके यह कहा कि "आप की पुस्तक कहीं खो गयी है। हम उसको तलाश रहे हैं; मिल जाने पर तुरन्त आपके पास पहुँचा देंगे। हम आप से बहुत ही लज्जित हैं, जो आप की रचित और स्वहस्त-लिखित पुस्तक हमारे द्वारा खो गयी है। हमको तो ऐसा मालूम पड़ता है कि किसी ने उसे चुरा लिया है।"

अस्तु, जी-मसोसकर क्या रोकर सभ्यता का ख्याल करके मुझे लाचार होकर पुनः भाषानुवाद के चिह्नों का संग्रह करके तथा जो नहीं मिले उन श्लोकों का

---

१. पादटिप्पणी—इतिश्री।

२. वह अब घर पर नहीं है। संभवतः किसी पुस्तकालय को दे दी गयी।

३. अब यह मूल संस्कृत ग्रंथ प्रस्तावना और संस्कृत नायिकाभेद की संक्षिप्त ऐतिहासिक विवरण सहित सं० सं० विश्वविद्यालय, वाराणसी से 'लघुग्रन्थमाला' के अन्तर्गत 'सारस्वती सुषमा ३५ व० १–२ अङ्को में प्रकाशित है।

अनुवाद पुनः लिखना पड़ा। कुशल इतना ही हुआ कि संस्कृत की मूल प्रति मेरे पास मौजूद थी। अस्तु, इस घटना के कई वर्ष के बाद एक रोज मैं काशी से प्रकाशित 'ब्राह्मण महासम्मेलन' नामक अखबार, जो मिती श्रावण शुक्ल चतुर्दशी, सोमवार तथा १९ अगस्त, सन् १९२९ के प्रथम वर्ष की ३४ संख्या का साप्ताहिक अंक था, पढ़ने लगा, तो छठवें पृष्ठ के चौथे कालम के शिरोभाग पर मेरी दृष्टि अचानक जा पड़ी, क्योंकि समाचार पत्रों में 'प्राप्ति स्वीकार' देखने की विशेष अभिरुचि नहीं रहती।

अस्तु, उसमें ग्रन्थ और ग्रन्थकर्त्ता का नाम पढ़ते ही कान खड़े हो गये। श्रीमान् बाबू साहब की शुभ स्मृति आकर सामने खड़ी हो गयी। अखबार का लेख अविकल उद्धृत कर देता हूँ।

**प्राप्ति स्वीकार**

रसिकजीवनी—मूल लेखक—बाबू वेंकटेश प्रसाद सिंह। टिप्पणी लेखक—साहित्याचार्य व्याकरणशास्त्री पं० हरगोविन्द मिश्र, मूल्य—१।)। काशी में मिलने का पता—मास्टर खेलाड़ीलाल, संस्कृत बुक डिपो, कचौड़ी गली, काशी।

पुस्तक को देखने से जान पड़ता है कि यह पुस्तक साहित्यदर्पण के तृतीय परिच्छेद-वर्णित नायक-नायिका भेद प्रदर्शन के लिए लिखी गयी है, पर इसकी शैली भिन्न है। स्वरचित श्लोक हिन्दी पद्य एवं साहित्याचार्य जी की छन्दपरिज्ञानार्थ टिप्पणी और अन्वय के समावेश हो जाने से सर्वसाधारण के अतिरिक्त छात्रों के लिए भी उपयुक्त हो गयी है। आशा है भावुक साहित्यिक नवयुवकों में इसका विशेष सम्मान होगा।

दूसरे ही दिन मैंने उक्त दुकान से एक प्रति मूल्य भेजकर मँगवा ली। उसको आद्योपान्त बहुत रात तक जागकर पढ़ता रहा। नये कवि की कृतियों को खूब जी जान से विचारपूर्वक देखा। कई दिन में जहाँ जहाँ 'सिंह' कवि ने बूढ़े ब्राह्मण के नाम को काटकर अपना नाम लिखा था अथवा दो-एक शब्दों के बदलने किं वा स्थान भ्रष्ट करने का उद्योग किया था, उन सब स्थलों को रक्तमसी से चिह्नित किया। अन्त में उसी 'रसिकजीवनी' के अन्तिम पृष्ठ पर यह विज्ञापन भी छपा-छपाया नयनानन्ददायक हो गया—

"साकारेश्वरमण्डनार्थं"
'विराड्रूपनिरूपणम्'
( संस्कृतम् )

श्रीमान् वेंकटेश प्रसाद सिंह लिखित।

विधाता की सम्पूर्ण सृष्टि में भारतवर्ष ही धर्म प्रधान देश है। यद्यपि यहाँ भी अनेक धर्मोपधर्म प्रचलित हैं, तथापि त्रिकाल में एक समान आदरणीय तथा सर्व

वर्ण व्यवस्थापक सनातन धर्म ही सर्वप्रधान माना जाता है। इसके अनेक अंशों में बहुत विरोधी मत प्रचलित हैं, इन्हीं मतों में से ईश्वर को निराकार माननेवाले भी हैं। इसमें श्रुति, स्मृति, पुराण, गीता, उपनिषद् तथा दर्शन आदि करीब २५ से अधिक ग्रन्थों के प्रमाणों से यह सिद्ध करके दिखाया गया है कि ईश्वर साकार है। इसके पढ़ने से निराकारेश्वरवादियों को ठीक-ठीक उत्तर दिया जा सकता है। पुस्तक देखने पर आप लोग स्वयं प्रशंसा करेंगे। कागज, छपाई आदि सब सुन्दर रहने पर भी दाम बहुत कम रखा गया है—मूल्य १) ।

पुस्तक मिलने के पते—

१. मास्टर खेलाड़ीलाल एण्ड सन्स,
संस्कृत बुक डिपो, कचौड़ी गली।
बनारस सिटी।

२. श्री हेड मैनेजर C/o श्री वें० प्र० सिंह जी,
मु० पो० केसठ (शाहाबाद)।

इस पुस्तकस्थ नोटिस ने मुझे उतावला बना दिया। तुरत दुकान से दो प्रतियाँ 'विराड्रूपनिरूपणम्' की भी मँगवानी पड़ीं, पर इसमें हमारे नवीन ग्रन्थकार का बिना परिश्रम केवल इतिश्री में नाम बदल देना तथा यतस्ततः बीच-बीच में 'त्वम्' अर्थात् 'पृष्ठभागः' के स्थान पर 'पृष्ठभागत्वम्' और विशेषरूप से 'अवच्छिन्न' लगाकर अपने को नैयायिक लिखने का हौसला पूरा कर दिखाने की चतुर चापलता का भी विराड्रूपनिरूपण आप से आप हो गया।

इसके थोड़े दिन बाद काशी के प्रसिद्ध दैनिक 'आज' नामक समाचार में, जो आश्विन कृष्ण एकादशी, रविवार, सं० १९८६ वै० तथा २९ सितम्बर सन् १९२९ ई० को छापा था, सातवें पृष्ठ के 'प्राप्ति स्वीकार' के चौथे कालम में यह रूपाक्षर देख पड़ा—"रसिकजीवनी" लेखक और प्रकाशक—श्रीवेंकटेश प्रसाद सिंह, ग्राम और डाकघर—केसठ, जिला—शाहाबाद, पृष्ठ सं०—११२, मूल्य–१)।

इस पुस्तक में नायक और नायिका के लक्षण संस्कृत श्लोक में वर्णन करके उसका अनुवाद हिन्दी पद्य में दिया है।

बस अब यह निश्चय हो गया कि यह उद्योग केवल कवित्व सिद्ध करने ही के लिये नहीं किया गया है, बल्कि अर्थायत्वावच्छिन्न भी है।

ये दोनों ही पुस्तकें, अर्थात् 'विराड्रूपनिरूपणम्' संवत्—१९८४ वैक्रमाब्दाः में और 'रसिकजीवनी' उसके दो वर्ष बाद १९८६ वै० में इसी काशी के

'विद्या विलास' नामक प्रेस में छपाई गयी थीं, जिस प्रेस के 'काशी संस्कृत सीरिज' में मेरी बनायी हुई जगत्प्रसिद्ध 'शिवमहिम्नः' स्तोत्र की पंचमुखी टीका अर्थात् 'महिम्न' के प्रत्येक श्लोकों का–(१) संस्कृत टीका, (२) संस्कृत पद्यानुवाद और (३) हिन्दी टीका, (४) हिन्दी पद्यानुवाद तथा (५) भाषा बिम्ब अर्थात् भाषा (हिन्दी) के उसी शिखरिणी आदि छन्दों में टीका भी वि०सं०१९६६ (१९२८ ई०) की पुस्तकमाला में प्रकाशित हो चुकी थी। उसकी भूमिका में 'महिम्न' के ३२ वें श्लोक 'असितगिरिसमम्' को, जिसे इस ग्रन्थ में स्मृति करके लिखा है, उल्लेख किया गया था। अस्तु, लाचार होकर मुझे इस नवीन ग्रन्थापहारी कविराज को कुछ शिक्षा दे देना अत्यावश्यक हो गया, क्योंकि 'जगन्नाथ पण्डितराज' ने अपने 'भामिनीविलास' में यह स्पष्ट लिख दिया है कि—

दुर्वृत्ता जारजन्मानो हरिष्यन्तीति शङ्कया।
मदीयपद्यरत्नानां मञ्जूषैषा मया कृता॥

वास्तव में यह देखा जाता है कि आजकल के बहुतेरे कवि अथवा लेखक लोग स्वयं योग्यता के अभाव से कुछ प्राचीन कवियों के भाव वा कविता अथवा लेख को कुछ इधर-उधर उलट-पलट कर कविगण में अपनी गणना कराने की उत्सुकता कभी-कभी दिखा देते हैं; परग्रन्थ का पूरा ग्रन्थ ही उठाकर उसमें ग्रन्थकार के नाम को उड़ा कर अपना नाम कविता में भी बदल कर घुसेड़ देने का परम नीचतापूर्ण साहस प्रकट करनेवाला मुझे तो यही एक निराला अकेला अलबेला दुःसाध्य कवि मिला। भला इतनी ढिठाई चोरी में भी तो कोई दिखलावे कि—'रामानन्दकवेस्तदेतदनिशं काव्यामृतं पीयताम्' (रसिक जीवन—प्रथम तरङ्ग, श्लोक—४) इसमें 'वैकुण्ठेशपितुः' बस इतना ही भर बदल कर काम पूरी तरह से चला लिया गया है। यों ही दश-बारह पद्यों में जहाँ-जहाँ कवि ने अपना नाम उल्लिखित किया है, सर्वत्र ही यही कवित्व शक्ति दरसाई गयी है। इस विषय में एक अनूठी बात विशेष विचारणीय है। प्राचीन कवि लोग तो अपना नाम लिखते ही नहीं थे। जैसे—महाकवि कालिदास, भारवि आदि। हाँ, नाटकों में प्रस्तावना स्थल में नट आदि के मुख से कवि और तत्कृत ग्रन्थ वा नाटक का नाम उल्लिखित कराने का नियम अवश्य पाला गया है, पर उसके बाद मध्यम काल के कवियों ने हिन्दी के ग्रन्थकार सूरदास, तुलसीदास आदि की भाँति कहीं-कहीं उपयुक्त स्थल पर नामोल्लेख का प्रयास उठाया है, क्योंकि हिन्दी की घनाक्षरी सवैया आदि बड़े-बड़े पद्यों में तो व्यर्थ होने पर भी नाम लिखने का मौका कहीं न कहीं मिल ही जाता है; परन्तु संस्कृत श्लोकों में नामोल्लेख को केवल नाम सूचक ही नहीं, वरन् प्रासंगिक और सार्थक ही प्रयोग करना अत्यावश्यक हो पड़ता है; क्योंकि हिन्दी की तरह संस्कृत

में भी विभक्ति के रूप और समासों के झगड़े से बच निकलना दुश्वार हो जाता है। फिर भी मध्यकालीन कवियों ने जहाँ मौका पाया है, अपना नाम रख ही दिया है। जैसे पूर्वोक्त 'पण्डितराज' ने, जो कि सूर, तुलसी ही के समकालीन थे, अपनी गंगालहरी में—'जगन्नाथस्यायं जननि ! जननोद्धारसमयः।'

अथवा हमारे बाबा रामानन्दजी ने केवल अपने 'रसिकजीवनम्' ही के प्रथम तरङ्ग के—२१।१८।१९।२२।२४।२८।५९।६८ संख्यक पद्यों में तथा च द्वितीय तरङ्ग के २।५।७ वें श्लोकों में अपना नाम रख दिया है। मालूम होता है कि इन लोगों की पवित्र आत्माएँ भावी तस्कर कविराजों की करतूतों का कुछ-कुछ अनुभव करती रही होंगी, तभी तो महिम्नस्तोत्र पर हर पक्ष और हरि पक्ष के दुहरे टीकाकार 'गोस्वामी मधुसूदन सरस्वतीजी ने' अन्त में यह लिख दिया है—

टीकान्तरं कश्चन मन्दधीरितः
सारं समुद्धृत्य करोति चेत्तदा।
शिवस्य विष्णोर्द्विजगोसुपर्वणा-
मपि द्विषद्भावमसौ प्रपद्यते॥

अस्तु, इन महात्माओं ने जो कुछ पहिले ही विचार कर लिख दिया है, उसका प्रत्यक्ष दर्शन हम लोगों को प्रकट रूप से दीख पड़ता है। वास्तव में कवि के नामोल्लेख कर देने से कवि की कृति और स्मृति जागरूक रहती है।

अस्तु, प्राचीन संस्कृत-साहित्य में एक 'चोर' कवि का बनाया हुआ 'चौरपञ्चाशिका' नामक एक छोटा सा ग्रन्थ प्रचलित है और 'माघश्चौरो मयूरः' इत्यादि कविगणना में नाम उल्लिखित होने पर भी 'चोर' कवि की कविता में कहीं भी 'चौर्य्यत्वावच्छिन्नता' नहीं दीख पड़ती, जैसी कि इस हमारे नवीन नैयायिक कवि ने दर्शायी है।

हमारे पूर्व पुरुष पण्डित रामानन्दजी को 'दाराशिकोह' ने 'विविधविद्याचमत्कारपारङ्गम' की पदवी प्रदान की थी और जब कंस की परिपाटी ग्रहण करके औरङ्गजेब ने अपने पिता शाहजहाँ को कैद करके अपने ज्येष्ठ सहोदर दाराशिकोह को कत्ल करवाया था, तो उस समय में हमारे बाबा रामानन्दजी ने अपने दुःखित कातर हृदय से ये शोक-सन्तप्त उद्गार लिपिबद्ध किये थे—

नो सैन्यं चतुरङ्गमीश्वरकृपानाशे प्रभूतं धनं
नो वा पौरुषमात्मनो न च नृपान्मन्ये समर्थान्यतः।
दाराशाहमहीपतिर्दशहयैर्वीरार्गलाग्रामतो
यातस्तां मधुरां कथञ्चिदकरोद्विश्रान्तिमेकक्षणम्॥१॥

येनेयं धरणी समुद्रवलया प्रत्यर्थिभूपालयाऽ-
प्येकीकृत्य वशीकृता हि नितरां दिल्लीनृपेण स्वयम्।
रङ्गान्तक्षितिपेन सोऽपि बत यत्कारागृहं प्रापितः
तस्माद् दैवगणाम्बुजाक्षरमयीं मन्ये समर्थां लिपिम् ॥२॥
येनेयं श्रीदकाशीसकलकविजनोद्दामदानप्रकारै-
राकीर्णा धर्मवर्णामृतयुतसलिलैः संस्कृता स्वर्णदी च।
आकूपारं क्षितीशो नतिविनयमतिर्यश्च कर्त्रेश्वरस्त-
द्दाराशाहेन्द्रमौलेर्विपदि कथमहो जीवनीयं हि विश्वम् ॥३॥
धर्मस्तुर्ययुगे न तेन जयति त्वेकाङ्घ्रितां श्रावितो-
यावत्तावदपुण्यपर्थ्यनिरतं निर्जित्य दानैः कलिम्।
सः पुण्यामृतवाहिनीं सुकृतवान्विश्वम्भरां श्रीदतद्-
दाराशाह विपत्सु हा ! कथमहो प्राणा न गच्छन्त्यमी ॥४॥

इन्हीं दाराशिकोह की बैठक जो कि दाल की मण्डी में पुरानी अदालत के नाम से अब तक काशी में मौजूद है और इन्हीं की बनवायी हुई सराय राजघाट के स्टेशन वाली सड़क में कट जाने से अब तक सड़क के दोनों तरफ भग्नावशिष्ट वर्तमान है। बनारस का 'दारानगर' और प्रयाग (इलाहाबाद) का 'दारागंज' महाल भी उन्हीं का जागरूक स्मारक है।

पं० रामानन्दजी अपने समय में काशी की विद्वन्मण्डली में सर्वप्रधान थे। इस कारण से सभाओं में प्रथम पूजा उन्हीं की होती थी। इनके पिता पण्डित मधुकर त्रिपाठी थे। वे भी बहुत बड़े विद्वान् थे। पण्डित रामानन्दजी की अटल पितृभक्ति, उनके बनाये हुए प्रत्येक ग्रन्थ, क्या छोटे-छोटे स्तोत्रादिकों में भी, पिता के नामोल्लेख ही से स्पष्ट दीख पड़ती है। इनके बनाये हुए कई एक ग्रन्थ यद्यपि खण्डित हो गये हैं, पर अब भी जो मेरे पास बचे-खुचे रह गये थे, उनकी छोटी तालिका यह है जिनमें पहिले स्तोत्रों की सूची दी जाती है।

**स्तोत्रों की अनुक्रमणिका**

इन स्तोत्रों में कुछ तो पूर्ण हैं और कुछ खण्डित हो गये हैं। हस्तलिखित पुस्तकों के हस्तान्तरित होने पर प्रायः ऐसी घटनाएँ हुआ करती हैं, जिसका उदाहरण मैं स्वयं बन बैठा हूँ। अतः स्तोत्रों की श्लोक संख्या और जिनमें समयोल्लेख हुआ है, उन सबका यथाकथञ्चित् उद्बोधन करा देना आवश्यक है।

---

४. पादटिप्पणी— नष्ट होने से बचे कुछ ग्रन्थ संस्कृत विश्वविद्यालय वाराणसी को श्री कमलापति त्रिपाठी ने समर्पित कर दिया।

स्तोत्रनाम, श्लोक-संख्या, छन्द तथा समय

१. रुद्रताण्डव। ८। पंचचामर छन्द। सं० १९४४ में देवीस्तवराज और चतुर्भुजाष्टक के साथ छपवाकर धर्मार्थ बाँटा गया था।

२. सदाशिवस्वरूपस्तुतिः—। ८। दण्डकच्छन्द। वि० सं० १७५९, वैशाख कृष्ण, प्रतिपद (१) शुक्रवार। इसके आदि के ढ़ाई श्लोक प्राप्त नहीं हुए हैं।

३. महाकालस्तोत्र—दण्डकच्छन्द। केवल आदि के दो श्लोक लब्ध हुए हैं।

४. शङ्करस्तोत्र—त्रिभङ्गी छन्द। आदिम पद्य के अनन्तर कुछ द्वितीय पद्य का भाग लब्ध हुआ। अतः श्लोक संख्या का पता नहीं।

५. भास्करस्तोत्र—। ८। दण्डकच्छन्द। सं० १७५५ भाद्रशुक्ल ६, शनि।

६. मार्तण्डस्तोत्र—स्रग्धरा छन्द, ५$\frac{3}{4}$ श्लोक तक लब्ध होने से अन्त का पता नहीं।

७. चतुर्भुजाष्टक—पंचचामरछन्द। सं० १७२३ फाल्गुन का बना है और सं० १९४४ में देवीस्तवराज के साथ छपाया गया था।

८. कृष्णाष्टक—उपजातिच्छन्द। सं० १७२४ ज्येष्ठ द्वादशी, शुक्रवार।

९. रामाष्टक—अनेक छन्दों में है।

१०. रामकीर्तिस्तोत्र—। ५। शार्दूल, स्रग्धरा छन्द।

११. आद्यास्तवराज—। १४। स्रग्धरा, शिखरिणी तथा शार्दूल छन्द।

१२. श्यामास्तवराज—। १६। स्रग्धरा, शिखरिणी, शार्दूल छन्द। इस ग्रन्थ के साथ सानुवाद छपा है।

१३. बगलामुखीस्तवराज—। १५। शार्दूल, वि० शिखरिणी।

१४. देवीस्तवराज—। १०। त्रिभङ्गी छन्द। सं० १९४४ में रुद्रताण्डव और चतुर्भुजाष्टक के साथ अमरप्रेस काशी में छपा था।

१५. विन्ध्येश्वरीपञ्चक—। ५। शार्दूल छन्द। यह पूर्ण नहीं मिला। अतः पंचक लिखा है।

१६. विन्ध्यवासिनीकल्पद्रुमस्तोत्र—। ८। स्रग्धरा छन्द। सं० १९४२ सा० सु० १ बना है और सं० १९६१ में छपवाकर धर्मार्थ बँटा।

१७. महिषमर्दिनीस्तव—। १०। पृथ्वी छन्द–८, शार्दूल छन्द–२। सं० १७४४, वैशाख शुक्ल १३, शुक्रवार को बना (संकटास्तोत्र) है।

१८. दुर्गाष्टपदी—। ९। आर्याच्छन्द।

१९. गङ्गाष्टपदी—। ९। आर्याच्छन्द।

२०. जाह्नवीस्तुति—। ८। स्रग्धरा, शार्दूल, पृथ्वी छन्दों में।

२१. गङ्गालहरी—। ८। त्रिभङ्गी छन्द।

२२. गङ्गास्तव—। १६। पज्झटिका (चौपाई) छन्द। सं० १७३९, अगहन-१।

२३. गङ्गामृताष्टक—स्रग्धराच्छन्द। ६ श्लोक लब्ध। अन्त अदृश्य।

२४. गङ्गाष्टक—। ८। शार्दूलविक्रीडित और अन्तिम एक पृथ्वी छन्द।

२५. मणिकर्णीकुसुम—। ८। त्रिभङ्गी छन्द। सं० १७४२ भाद्रकृष्ण–१३।

२६. कलिकौतुकाष्टक—। ८। मन्दाक्रान्ता छन्द।

२७. कामाष्टक—। ८। मन्दाक्रान्ता छन्द।

२८. कोपाष्टक—। ४। मन्दाक्रान्ता छन्द। पूरा न मिलने पर ४ पूर्वार्ध है।

२९. लोभाष्टक—। ८। मन्दाक्रान्ता छन्द है।

३०. मोहाष्टक—। ४। मन्दाक्रान्ता छन्द। इतना ही भर मिल सका।

३१. मोहनाशन।

३२. आत्मस्तोत्र—इसके केवल तीन पद्य त्रिभङ्गी छन्द के मिल सके। अन्त का पता नहीं होने से श्लोक संख्या नहीं।

३३. विष्णूत्थापनस्तोत्र—स्रग्धरा छन्द। केवल १३ श्लोक मिला है।

३४. तारापति (चन्द्र) स्तोत्र—शार्दूल विक्रीडित। ३ श्लोक लब्ध।

ग्रन्थों की तालिका

१. वेदमन्त्रार्थसंग्रह—इसमें वेद के प्रचलित प्रायः नित्य अथवा श्राद्धादि में व्यवहृत होनेवाले मन्त्रों के सामान्य अर्थ भाष्यानुसार संगृहीत किये गये हैं।

२. तत्त्वदीपिका—सिद्धान्तकौमुदी (व्याकरण का सर्व प्रसिद्ध प्रकरण ग्रन्थ) की टीका है। यह टीका हलन्त स्त्रीलिङ्ग तक आदि से मिलती है; पर आगे कहीं कुछ तिङन्त में और कुछ कारक में भी खण्डित मिली है। इसका मङ्गलाचरण इस प्रकार है—

नत्वा साम्बसदाशिवाङ्घ्रियुगलं कृत्वा गुरोर्वन्दनं
स्मृत्वा चापि समन्ततोऽर्थगहनास्तास्ता मुनीनां गिरः।
शिष्याणामनवद्यबुद्धिविमलज्ञानाय सत्कौमुदी-
टीकामुक्तिविशेषयुक्तिनिकरैः कुर्मः प्रमाणास्पदाम्॥ १॥

३. तर्कगुम्फण—इसमें प्रायः तर्कसङ्ग्रह को ललित पद्यों में इस प्रकार से बद्ध किया गया है कि विद्यार्थी लोग विना प्रयास के सब विषयों को समझ भी जायें

और कण्ठस्थ भी कर लें। ग्रन्थ पूर्ण होने पर भी अधूरा ही मिला है। इसका कुछ उदाहरण (बानगी) देखिये—

चक्षुर्ग्राह्यगुणो हि रूपमुदितं शुक्लादिभिः सप्तधा
जिह्वाग्राह्यगुणो रसो हि मधुराम्लाद्यैर्मतः षड्विधः।
घ्राणग्राह्यगुणस्तु गन्ध उदितो यस्तु त्वचा गृह्यते
स स्पर्शः कथितः स चापि कथितः शीतादिभेदैस्त्रिधा ॥ १० ॥

एकत्वादि जगत्प्रसिद्धगणना संख्याऽत्र संख्यावतां
मानं तत्परिमाणमत्र हि पृथक् पार्थक्यमत्रोच्यते।
संयोगादि विनाशकस्तु कृतिभिः प्रोक्तो विभागः परो
यस्तु स्याद् व्यवहारतः कणभुजस्तत्स्यात्परत्वादिकम् ॥

साक्षात्कारप्रमायाः करणमपि चतुर्भेदसंकेतसाध्यं
सप्रत्यक्षानुमानोपमितिसमुदितं यन्मतं स्यात् सशब्दम्।
तत्त्रेधा स्यात् पटादौ तदपि च समवायी नत्रोकस्तदन्यो
रामानन्दोक्तयुक्त्या भवति तदपरस्यान्निमित्तं तृतीयम् ॥ १५ ॥

प्रत्यक्षे यदभाववत्यभिहितं प्राज्ञैः कणादादिभि-
स्तर्कोक्त्या हि विशेषणेन सहितो भावो विशेष्यात्मकः।
कुम्भो नात्र महीतलेऽत्र कथितः स्यात् सन्निकर्षस्ततो
'रामानन्द'—मतं तदेव मुनिभिः प्रत्यक्षमेतन्मतम् ॥ १८ ॥

इति प्रज्ञावतां प्रीत्यै तर्कज्ञानार्थसिद्धये।
रामानन्देन विदुषा कृता प्रत्यक्षगुम्फणा ॥ १९ ॥

व्याप्यत्वासिद्धपक्षे भवति गिरिरयं वह्निमान् धूमवत्वा-
दत्रोपाधि कणादः स्वयमिह जगदे सङ्गमार्द्रेन्धनस्य।
मैत्रीपुत्रेऽसितत्वं स्फटिकगतजपापुष्पलौहित्यमेवं
रामानन्दैरपीत्थं कविभिरभिहितं द्वैतमद्वैततत्त्वे ॥ ४ ॥

उपमितेः करणं ह्युपमानकं यदिह गोसदृशो गवयो मतः।
वनगतः पुरुषादवधारयन्नयमसौ पुरुषः प्रतिपद्यते ॥ १ ॥

आप्तोक्तं पदपुञ्जमत्र कणभुक्तन्त्रेषु शब्दो मतः
शक्तं तत्पदमुच्यते पदमिदं गामानयेत्यादिकम्।
आकाङ्क्षादिसहेतुकः स च मतस्तद्द्वैदिकं लौकिकं
द्वेधा वैदिकमीश्वरोक्तमखिलं चात्र प्रमाणीकृतम् ॥ २ ॥

उक्तो यथार्थानुभवः सहेतुस्त्रिधा यथार्थानुभवस्त्विदानीम् ।
वितन्यते वादविदां प्रमोदप्रदं विदग्धप्रतिपत्तिहेतोः ॥ ३ ।
स्यादेप संशयविपर्ययतर्कभेदात्त्रेधा विरुद्धमतिकृत्स तु संशयोऽत्र ।
स्थाणुर्भवेदयमसौ पुरुषोऽथवेति स्यात् संशयः स तु मतो न यथार्थरूपः ॥

मुधा यत्तु ज्ञानं तदिदमुदितं स्यात्परमिदं
यथा शुक्तावेतद्रजतमिति बुद्धिर्भ्रमकृताम् ।
स तर्को यद्वयाप्यप्रथितसहजारोपकथितो
न वह्निर्नो धूमस्स तु भवति सव्यापकगतः ॥ ५ ।

सुखं हि दुःखं हि कणादरीत्याऽनुकूलवेद्यं प्रतिकूलवेद्यम् ।
इच्छा हि कामः कथितो मुनीन्द्रैर्द्वेपो हि मन्युर्हि कृतिः प्रयत्नः ॥ ६ ।

स धर्मो यस्त्वीड्यो विधिविहितकर्मैकविदितो
निपिद्धाचारो यः स इह कथितोऽधर्मफलकः ।
त्रिधा स्यात्संस्कारः सकलमुनितर्कैकवचने-
र्ध्रुवं रामानन्दद्विजवरकवित्वामृतमते ॥ ७ ।

इस प्रसंग में अधिक पद्य उद्धृत हो गये हैं। आगे चलकर पाठक महोदयों को इतना कष्ट नहीं दिया जायगा। घबड़ाने से कवितामृतपान में विच्छेद का डर बना रहता है। इसी से मुक्तावली की खण्डित टीका की भी चर्चा छोड़नी पड़ी।

४. वैद्यक—वैद्यक में एक औपध-संग्रह प्राप्त हुआ है, पर उसमें अथ वा इति नहीं लगायी गयी है। ऐसा ज्ञात होता है कि उस पर और लिखने की इच्छा थी, पर पूरी हुई या नहीं? परन्तु कविता ललाम है। ग्रन्थ साधारण होने पर भी अनुभूत और उपयुक्त ज्ञात होता है। कुछ उदाहरण (नमूना) परीक्षार्थ देता हूँ— यथा—साँप-विच्छू के विपय में :—

यः पिवति पुष्यदिवसे जलपिष्टं सितपुनर्नवामूलम् ।
तत्सन्निधौ न वर्पं वृश्चिकभुजङ्गाः प्रसर्पन्ति ॥
लज्जावतीमूलविलिप्तपाणिर्बद्ध्वाऽथवा यत्र तदीयमूलम् ।
गृह्णाति सर्पान् प्रमतोऽतिघोरान् हठात्सुपर्णप्रतिमप्रभावः ॥
अपहरति मण्डलिविपं पानेनालेपनेन वा सद्यः ।
काकजङ्घामूलं काञ्जिकपरिपेपितं पुंसाम् ॥

तथा च वृश्चिकविषशमनम्

"उष्णं घृतं सैन्धवचूर्णयुक्तं निपीतं वृश्चिकविपापहम् ।"

अब एक 'कस्तूरिकाद्य' चूर्ण चख लीजिए, तब बस—

कस्तूरिकाकुङ्कुमकुम्भकोशजातीफलं मोचरसोऽजमोदा।
माषूफलं सस्फटिकाक्षकान्ति समाभिधेयां करहाटकञ्च॥
यो मापमात्रं दिवसावसाने नरोऽस्ति चूर्णं पयसानुपानम्।
स चण्डवेगश्चिरशुक्रधारी नारीशतं द्रावयति प्रसङ्गात्॥

इसमें बहुतेरे चूर्ण रस-रसायन धातु-मारणादि की विधियाँ हैं।

अथ गर्भाधानाधिकारः

मूलं या लक्ष्मणायाः पिवति ऋतुमती गर्भवद्धानुरागा
पुष्यार्कादिप्रसङ्गात् कथमपि विधिना साधकैः प्रापितायाः।
जीवद्वत्सैकवर्णोद्भवसुरभिपयःपेपितायास्तदानीं
'रामानन्द'-प्रसङ्गाज्झटिति खलु भजत्येव वन्ध्यापि गर्भम्॥

अब यह वैद्यक प्रकरण लेख विस्तार कर रहा है। अत एव और भी उपयोगी अनेक विपयों को छोड़कर आगे चलना आवश्यक है। अतः पाठकगण क्षमा करें। पर इसके साथ हिन्दी भाषा में भी पद्यवद्ध कुछ अनुभूत औषधों का प्रयोग मिला है। संक्षिप्त उदाहरण ले लीजिए—

लाची तजपत्रज त्रिकुट वंश विलोचन जानु।
नागकेसरी सहित सब तोला तिन तिन मानु॥
सब मिलाइके खाइये चूरन सुभग बनाइ।
रामानन्द सुनासिका रुधिर थंभ ह्वै जाइ॥

इसमें वाजीकरण, स्तम्भन और द्रावणादि की विशेपता है। अतः कुछ अश्लीलता का दोप आ जाना आवश्यक ही ठहरा—तब अब इस प्रकरण की इति।

५. ज्योतिष—इस विपय पर कोई स्वतन्त्र ग्रन्थ नहीं मिला; परन्तु कई कुण्डलियाँ उन्हीं की बनायी मिली हैं; वरन् एक कुण्डली शाहजहाँ बादशाह की भी उनकी हस्तलिखित है, जिसमें विक्रम सं० १६४८ और शालिवाहन शक १५१३, माघ मास शुक्ल १ पड़िवा, बुधवार को जन्म का उल्लेख किया गया है और नाम खुरम सुल्तान लिखा है। इतिहासज्ञों को इस तारीख के जाँचने-समझने का पूरा अधिकार है। मैं तो जन्मपत्री की स्तुति का एक श्लोक उद्धृत कर देता हूँ—

लोकानां सौख्यदात्री सुतजयजननी तुष्टिदायुःप्रदात्री
माङ्गल्योत्साहकर्त्री गतभवसदसत्कर्मणां व्यञ्जयित्री।
नाना सम्पद्विधात्री धनकुलयशसां सर्वदा वर्द्धयित्री
रिष्टापद्विघ्नहन्त्री गुणगणवसतिर्लिख्यते जन्मपत्री॥

६. निर्णयार्णव :—यह सामान्य रीति से तिथि-पर्वों का निर्णय सप्रमाण करता है। वि० सं० १७३५ का समयोल्लेख है। अपूर्ण है।

इसी प्रकार से शकुनशास्त्र में भी एक निर्णय-ग्रन्थ लब्ध हुआ है। पर खेद से कहना पड़ता है कि वह भी पूर्ण नहीं है। अस्तु, उसका भी दो एक उदाहरण देखना चाहिए। प्रायः कौवे सभी लोगों को सब जगह यात्रादि में मिला ही करते हैं, तो पहले उसी शकुन को विचारना चाहिए—

दन्तिस्तम्भगतो गजेन्द्रफलदो राज्यं हयस्थो गवां
लाभं धेनुगतो महोत्सवकरः स्याद्भूगृहे संस्थितः।
क्षेत्रे क्षेत्रफलप्रदः खरगतो रोगं मृतिं माहिषे
प्रासादेऽपि तथोन्नतिं प्रकुरुते ध्वाङ्क्षो ध्वजस्थो जयम्॥
बन्धं रज्जुमुखोऽस्थिखण्डवदनो विघ्नं पुरीषे तथा
शुष्के भीतिमसौ प्रयच्छति रणं पिच्छं मुखे धारयन्।
पुष्पास्योर्थफलप्रदः शुचमसौ धत्तेऽथ दग्धाननो
'रामानन्द'मनीषिभिर्विरचितः काकक्रमः शाकुनः॥

इसमें सियार आदि का भी शकुन लिखा गया है। प्रायः २० श्लोक मिले हैं।

७. वैदिककर्मकाण्ड

इस विषय में अनेक ग्रन्थ उपलब्ध हैं। यथा—(१) विवाहपद्धति सटीक, (२) षोडशक्रियानुक्रम, (३) आरामोत्सर्ग, (४) जलाशयोत्सर्ग, (५) वनोत्सर्ग इत्यादि पर षोडशक्रियानुक्रम ही सम्पूर्ण मिला है, जिसका आदिम पद्य यह है—

नत्वा श्रीगणपं गुरुं ग्रहगणान् गौरीं गिरां देवतां
दिक्पालान्सकलान्समस्तकलशाधिष्ठातृदेवानपि।
रामानन्दकविः करोति कृतिनां मोदाय संक्षेपतो
रम्यं षोडशकर्मणां मृदुपदैस्तत्तत्क्रियानुक्रमम्॥१।

इस ग्रन्थ में अन्य प्रबन्धों की अपेक्षा कवि ने अपने दादा और दादी का भी नाम उद्धृत किया है; क्योंकि अन्य स्थलों में केवल अपने पिता 'मधुकर' ही का नाम सादर लिखा है। पर इसमें मात्रा बढ़ा दी गयी है। यथा—

विद्याविश्रुत'विश्वनाथ'तनयः श्रीमत्सदाचारवित्
'कस्तूरी'तनुजश्च यो 'मधुकर'स्तस्यात्मजेन स्वयम्।
इत्येकादशवासरोचित इह व्यालोड्य तत्पद्धतिं-
'रामानन्द'मनीषिणा विरचितो नामक्रियानुक्रमः॥२४।

अच्छा, अब विवाहपद्धति का भी मङ्गलाचरण लीजिये—

स्वस्तिश्रीमत्प्रशस्तिप्रकरपरिलसद्गद्यपद्यप्रबन्धै-
रुन्मीलद्गोत्रवर्णावलिभिरनुपमामाशिषां राशिभिश्च ।
नत्वा पाशाङ्कुशाढ्यं करिपतिवदनं मुग्धसिन्दूरसान्द्रं
'रामानन्द'-त्रिपाठी परिणयनविधेः पद्धतिं व्यातनोति ॥१।

इसमें गोत्रोच्चारादि प्रकरण में विशेष पाण्डित्य दरशाने ही के कारण इस ग्रन्थ की टीका स्वयं लिखनी पड़ी है, ऐसा अनुमान होता है; जो कि टीका के मङ्गलाचरण से स्पष्ट है—

पूर्वाचार्यनिबद्धपद्धतिततीरालोड्य शास्त्राम्बुधे-
र्वागर्दंवत्यमदभ्रमिभ्रमकरं सम्भाव्य शुभ्रं महः ।
एतस्यां निजपद्धतौ परिलसद्गूढोक्तिसन्दीपनं
'रामानन्द'-मनीषिणोपनयनव्याख्यानमारभ्यते ॥

पर, वही पुराना रोना इसमें भी खण्डित होने-सा गाना पड़ता है। ऐसा मालूम पड़ता है कि षोडश संस्कारों की पृथक्-पृथक् पद्धतियाँ बनी थीं; क्योंकि श्राद्ध प्रकरण में नान्दी, क्षपाह, पार्वण, एकादशाह, अन्वष्टका (मातृनवमी श्राद्ध) गयापटल आदि के छिन्न-भिन्न पत्रों की भरमार है। एतद्भिन्न जलाशय आरामादि के भी उत्सर्ग की पद्धतियाँ प्राप्त हुई हैं, जिसकी अन्तिम सूचना इस प्रकार से दी गयी है—

स्वस्तिश्रीविक्रमार्कक्षितिपतिसमयातीतसंवत्सरेषु
प्रख्यातार्येषु लोकाम्बुनिधिकुभिरपि प्रोक्तमानान्वितेषु ।
'रामानन्दो' मनीषी व्यलिखदखिलमप्यम्भसां कर्महेतो-
रुत्सर्गं मार्गशीर्षे रतिरमणतिथौ मङ्गले शुक्लपक्षे ॥ १ ।

पूर्वकाल के विद्वानों में कर्मकाण्ड की विशेषता बड़ी मात्रा में होती थी। अपने ही पिता और पितृव्यादिकों की कर्मनिष्ठा अब हम लोगों में लुप्तप्राय होती जा रही है। तब वे सब बातें कर्तव्य समझी जाती थीं; पर अब उनका नाम ढोंग पड़ा है। अस्तु, इस विषय को अब यहीं छोड़ देता हूँ; क्योंकि दूसरों की भी कुछ खबर लेनी चाहिए।

### ८. लिङ्गानुशासन

इस नाम का कोई ग्रन्थ कोश में बनाया गया था; क्योंकि अमरकोश की प्रसिद्ध रामाश्रमी टीका उक्त पण्डित बाबा के हाथ की लिखी मेरे पास वर्तमान है। ऐसा ज्ञात होता है कि कुछ उसी के परिशिष्ट अंश की पूर्ति करने को यह नूतन लिङ्गानुशासन लिखा गया होगा। वह ग्रन्थ तो उपलब्ध नहीं हुआ, पर उसकी टीका ही जो स्वयं भी खण्डिता है, उसका पता बताती है। यथा—

नत्वा विश्वेश्वरं देवं स्वीयलिङ्गानुशासने।
'रामानन्देन' विदुषा टीकेयं तन्यते शुभा॥ १।

९. छन्दोरत्नाकर

छन्दोरत्नाकर नामक ग्रन्थ छन्द विषयक है। ज्ञात होता है कि उक्त ग्रन्थ में वृत्तरत्नाकर से बढ़ाकर प्रस्तारादि का उल्लेख किया गया है; पर आद्योपान्त सम्पूर्ण ग्रन्थ बिना पढ़े उसपर समालोचना लिखना धृष्टता है। अतः उसका मङ्गलाचरण भेंट कर दिया जाता है—

नत्वा वाचमचिन्त्यशक्तिविलसत्सद्‌गद्यपद्यामृत-
प्रोन्मीलद्बहलप्रमोदजनने कल्पात्मिकां वीरुधम्।
कुर्मोऽनेकमुनिप्रणीतविविधांस्तत्तत्प्रबन्धानपि-
व्यालोड्य प्रतिपत्तये कविगिरां रत्नाकरं छन्दसाम्॥१।

१०. तन्त्रशास्त्र

तन्त्रविद्या में बाबा की विशेष श्रद्धा ज्ञात होती है; क्योंकि उनके लिखित अनेक स्तोत्रों में तान्त्रिक मन्त्रों का उद्धार किया है। इस 'विराड्विवरण' के साथ में भी एक 'श्यामास्तवराज' छपा है, जिसमें काली के मन्त्रों का उद्धार स्पष्ट है। ऐसा सुना जाता है कि पण्डित बाबा ने अन्त्यावस्था में संन्यास ग्रहण किया था और तदनन्तर काशी के लक्ष्मीकुण्ड पर कालीमठ की स्थापना की थी, जिसमें श्री कालीजी की मूर्ति आज भी विद्यमान है और अद्यावधि भाद्रशुक्ल पूर्णिमा (प्रोष्ठपदी) को उक्त मठ के महन्त मेरे घर पर आराधना में आकर भिक्षा करते हैं। संन्यास ग्रहण के बाद के स्तोत्रों में बाबा ने अपना नाम केवल ज्ञानानन्द लिखा है।

ऐसे स्तोत्रों में—(१) आद्यास्तवराज, (२) श्यामास्तवराज और (३) बगलामुखीस्तवराज पूर्ण मिले हैं और जिनका आदिम पद्य यह है—

१. पञ्चतत्त्वसपर्या

वामे षट्कोणवृत्ते बहिरपि चतुरस्रीकृतेऽर्घ्यामृतेना-
भ्युक्ष्याधारादिशक्तेर्यजनमिह महामण्डले तन्निधाय।
............मण्डलायेत्यपि च दशकलाद्यात्मने............
कुम्भं फट्कारमूर्द्धं तदुपरि वसनैर्भूषयेद्रक्तमाल्यैः॥१।

यह सपर्या बहुतेरे मन्त्रों से भरी है और प्रायः ४० श्लोकों में पूर्ण हुई है। शार्दूलविक्रीडित छन्द है।

२. आकाशवासिनीसपर्या

इसका आदि पत्र, जिसमें ४ श्लोक प्रथम के थे, नहीं मिलता। दूसरे से चौथे पद्य तक पूरे मिले हैं। इसकी पूर्ति का २८ वां श्लोक यह है—

विचार्याचार्याणां निगमविहितं पद्धतिमतं
मुदे तत्तत्कौलव्रतनिरतकौलव्रतजुषाम् ।
इयं 'ज्ञानानन्द'द्विजपरमिबद्धात्मवचनैः-
सपर्यापर्याप्तिं भृशमुपगताकाशवसतेः ॥ २८ ।

३. असितादिविद्यापद्धतिः

यह ग्रन्थ तान्त्रिक रीति से सम्पूर्ण लिखा गया है। इसके १२ पत्र हैं। इसके अन्त में अर्द्ध पद्य यह मिलता है—

भाद्रे संवति शोणिते गुहतिथौ कृष्णे बुधे वासरे।
'ज्ञानानन्द'मनीषिणा विरचिताऽज्ञात्पद्धतिः पूर्णताम् ॥

ऐसा ज्ञात होता है कि इसी 'असितासपर्या' को श्लोकबद्ध बनाया है, जिसकी पूर्ति ११ पत्रों में ५१ श्लोकों में की गयी है। इसके भी अन्त में पूर्वोक्त पद्य कुछ फेर-फार कर इस प्रकार से उल्लिखित है—

विचार्याचार्याणां निगमविहितं पद्धतिमतं
मुदे तावत्तत्तत्क्रमनिरतकौलव्रतजुषाम् ।
इयं 'ज्ञानानन्द'द्विजवरनिबद्धात्मवचनैः
सपर्यापर्याप्तिं भृशमुपगतेहासिततनोः ॥ ५१ ।

४. कालरात्रिविधानम्

इसमें अनुष्टुप् छन्द के १०३ श्लोक हैं और 'वि० संवत् १७३५ फाल्गुने शुक्लपक्षे तृतीयायां लिखितम्' इसके अनन्तर कहीं से पूजा-विधान भी उद्धृत करके लिख दिया है—जो किसी तान्त्रिक ग्रन्थ का ज्ञात होता है।

५. गुह्यषोढाविवरणम्

इस ग्रन्थ में पहिले १३ श्लोकों में से एक नमूना पेश करता हूँ—

प्रातः पद्मासनस्थः शिरसि परिलसच्छ्रीसहस्राम्बुजान्तः
प्रोन्मीलच्चन्द्रबिम्बस्थलगतविमलज्योतिजाग्रत्त्रिकोणम् ।
हंसाख्ये तत्र पीठे वरमभयकरं रक्तशक्त्योपविष्टं
शुक्लालङ्कारशुक्लाम्बरधरममलं श्रीगुरुं भावयामि ॥ १ ।

श्लोकों के अनन्तर गद्य में मन्त्रों का विवरण और समतन्त्रक करन्यास, अङ्गन्यास आदि लिखे हुए हैं।

इसी तरह पर अनेक तान्त्रिक यन्त्र-मन्त्रादिक भी स्फुट पत्रों पर लिखे मिलते हैं, जिन सबका लिख डालना असम्भव नहीं तो दुस्तर अवश्य ही है।

## शुद्धसत्त्वं विष्णुः ॥ २८ ॥

सत्त्वात्मकत्वात्, जगद्धितत्वात्। 'विष्णुना पाल्यते विश्वम्' इति व्यासवाक्याच्च।

## कोपो रुद्रः ॥ २९ ॥

तमोमयत्वात्, संहारकत्वसाम्यात्। 'रुद्रो मन्युस्तदीयः' इति पञ्चरात्राच्च।

## चन्द्र प्रसादः ॥ ३० ॥

सन्तापहारिकत्वसाम्यात्, आह्लादकत्वसाम्यात्। 'प्रसादे सर्वदुःखानां हानिरस्योपजायते" इति श्रीभगवद्गीतायाश्च।

## वशिष्ठो ज्ञानम् ॥ ३१ ॥

वशिषु जितेन्द्रियेषु तिष्ठतीति व्युत्पत्त्या ज्ञानसाम्यात्, दन्त्यपाठेऽपि वसतीति वः, अतिशयेन वः वसिष्ठः। सर्वत्र विद्यमानं ज्ञानमेवोक्तम्—'यो ह वै वसिष्ठं वेद वसिष्ठो ह स्वानां भवति' इति श्रुतेश्च।

## वायुः प्राणः ॥ ३२ ॥

वायोर्जगत्प्राणत्वसाम्यात्, 'जगत्प्राणः समीरणः' इति त्रिकाण्डीतः। 'प्राणस्तथाऽनुगमात्' इति शारीरिकवेदान्तसूत्राच्च।

---

शुद्ध सत्त्व तहँ विष्णु विचारा, सतोगुनी जग रच्छन हारा।
पालत विष्णु जगत यह बाता, कही व्यास मुनि आगम ज्ञाता ॥२८।
तिहि कर क्रोध रुद्र भगवाना, तमोरूप संहारक जाना।
नारद पंचरात्र अस गावा, रुद्रहि मन्यु तदीय बतावा ॥२९।
तासु प्रसाद चन्द्रमा होई, हरत सकल सन्तापै सोई।
तिहि प्रसाद अव दुःख नसावै, भगवद्गीता अस बतलावै ॥३०।
हैं वसिष्ठ ज्ञान समताके, कहहिं सकल इन्द्रिय वश जाके।
यहि ते ज्ञान साम्य बतलावा, दन्त्य वसिष्ठहु कर यह भावा ॥
बसत विशेष रूप से जोई, सगरो ज्ञान रहत है सोई।
जो वसिष्ठ सो निजकर ज्ञाना, श्रुति के वचन तहां परमाना ॥३१।
वायू तिनकर प्रान है, वहै जगत को प्रान।
जगतहिं प्रान समीरनै, कहत त्रिकाण्डी जान ॥
यह प्रसिद्ध सिद्धांत, अनुगम ही ते प्रान है।
शारीरक वेदान्त,—सूत्र कहत जो व्यास कृत ॥३२।

## अधर्मः पृष्ठभागः ॥ ३३ ॥

धर्मरूपेश्वरवैमुख्यसाम्यात् । 'पराभूतेरधर्मस्य तमसश्चातिपश्चिम' इति श्रीभागवताच्च ।

## मेरुः पृष्ठदण्डः ॥ ३४ ॥

भूलोकमध्यवर्तित्वात्, अतलस्पर्शित्वात्, अस्थिस्थानीयसर्वपर्वतमुख्यत्वात् । 'मेरुः शिखरिणामहम्' इति श्रीभगवद्वाक्याच्च ।

## अन्ये पर्वता अस्थीनि ॥ ३५ ॥

काठिन्योच्चत्वसाम्यात् । 'गोत्राणामस्थिसंहतिः' इति श्रीभगवद्वाक्याच्च ।

## महापुरुषस्य प्राङ्मुखस्य पुरःस्थितः पुरुहूतो हस्तौ ॥ ३६ ॥

बाहुस्थानीयलोकपालमुख्यत्वसाम्यात्, वज्रकरत्वेन काठिन्यसाम्यात् । 'इन्द्रादयो बाहव आहुरुस्राः', 'हस्तयोरिन्द्र आविशत्' इत्यादि श्रीभागवताच्च ।

## अप्सरसः कररेखाः ॥ ३७ ॥

रेखाणां स्त्रीत्वेनातिसुन्दरत्वात्, कराधिष्ठातृ-इन्द्राधीनत्वसाम्यात् । 'देव्यस्तु कररेखाः स्युः' इति पद्मपुराणाच्च ।

---

है अधर्म पीठ के भागा, धर्मरूप प्रभु विमुख विरागा ।
जब अधर्म कतहूं धरि दावै, तमगुन तब पीछे लगि धावैं ॥
लिखी भागवत की यह बाता, (तब अधर्म से कछ मति नाता) ॥३३।
कहत सुमेरु पीठ कै रीढ़ा, कारन भूमि मध्य पर पीढ़ा ।
अतल लोक से जुटि कर रहहीं, हाड़ समान अन्य गिरि सबहीं ।
तिनमें मुख्य विशिष्ट यह अहैं, "हौं शिखरिन में मेरु" प्रभु कहैं ॥३४।
हाड़ समान अन्य सब सैला, तहँ काठिन्य उच्चता फैला ।
"सब ही सैल अस्थि की संहृति", भगवत बानी ऐसहि कहति ॥३५।
प्राङ्मुख महापुरुष के आगे, बैठे इन्द्र बाहु सम लागे ।
लोकपाल सब बाहु समाना, तिन सब में इन्द्र प्रधाना ॥
सोहै वज्र कठिन करमाहीं, कल्पवृक्ष इच्छित फल जांही ।
"इन्द्र आदि बाहु भगवन्ता", 'रहैं हाथ में इन्द्र' समंता ॥
ये हैं वचन भागवत केरे ( नहिं कपोल कल्पित हैं मेरे ) ॥३६।
कर रेखा अप्सरा सुहाती, रेखा स्त्रीत्व हेतु मन भाँती ।
कर समान इन्द्र आधीना, अब सुख कारन कहत प्रवीना ॥
"कररेखा अपसरा सुजाना", कहत वचन यह पदुम पुराना ॥३७।

**गुह्यकाः कराङ्गुलयः ॥ ३८ ॥**

धनगोपनादिकर्तृत्वसाम्यात् । 'कराङ्गुल्यस्तु गुह्यकाः' इति हरिवंशाच्च ।

**यक्षाः करनखाः ॥ ३९ ॥**

गुह्यकानामुपरिवर्तमानत्वात्, क्रौर्यादिसाम्यात् । 'यक्षाः करनखा ज्ञेयाः' इति वाराहपुराणाच्च ।

अग्निधर्मराज–निर्ऋत्या–ईशान–कुबेर–वायवश्च यथाक्रमं मणिबन्धावांसं भागत्रयक्रमेण ।

**अग्निधर्मराजनिर्ऋत्या ईशानकुबेरवायवश्च यथाक्रमं मणिबन्धावांसं भागत्रयक्रमेण दक्षिणवामबाहू ॥ ४० ॥**

पालकत्वसाम्यात्, बलवत्वसाम्यात्, 'बाहवो लोकपालानां प्रायशः क्षेमकर्मणाम्' इति स्मृतेः । 'बाहू राजन्यः कृतः' इत्यादि श्रुतेश्च ।

**सृष्ट्यादीनि कर्माणि ॥ ४१ ॥**

सृष्टिस्थितिप्रलयानां वृष्टिधनासुहारादिद्वारा इन्द्रादिलोकपालाधीनत्वात्, 'कर्मगुणप्रवाहः' इति श्रीभागवताच्च । गुणप्रवाहः प्राणिनामितस्ततः संसरणं तस्य क्रीडेत्यर्थतः ।

---

गुह्यक गनकर आँगुरी आँही, धनरच्छादिक काम करांही ॥
"करकी आँगुरि गुह्यकै" श्री हरिवंश बखान ॥ ३८ ।
कर नख यक्षहि होत हैं, गुह्यक ऊपर थान ।
फेरि क्रूरता आदि गुन, दूनो ओर समान ॥
जक्षहि कर नख जानिए, कहत बराह पुरान ॥ ३९ ।
अगिन जम नैर्ऋत्य ईशाना, पुनि कुबेर बायू भगवाना ।
लै मनिबंध यथाक्रम तीनो, दाहिन बाम बाहु परिचीनो ॥
पहिले पालक समता पावैं, पुनि बलवत्ता भले दिखावैं ।
लोकपाल के बाहु सब प्रायः करते क्षेम ।
छत्री बाहु समान है पालत सब विधि नेम ॥
स्मृति के श्रुति के बचन ये क्रम ते देत बताय ॥ ४० ।
सृष्टि आदि सब लोक के कहत कर्म समुदाय ॥
सृष्टि-स्थिति-प्रलयादिक कर्मा, बृष्टी धन निधनादिक धर्मा ।
लोकपाल इन्द्रादि सुधारैं ( अपने साँचा में जनु ढारैं ) ॥
'कर्महि गुन प्रवाह' कह ब्यासा, इत उत जीव संसरन बिलासा ॥ ४१ ।

**ध्रुवौ दक्षिणवामस्कन्धौ ॥ ४२ ॥**

ध्रुवयोः स्वर्लोकोपरि वर्तमानत्वात् । 'दक्षतो वामतश्चैव द्वौ ध्रुवौ गाणके मतौ' इत्यादिब्रह्मयामलाच्च ।

**वरुणः ककुत् ॥ ४३ ॥**

ध्रुवयोर्मध्ये पश्चिमदिग्वर्त्तित्वात् । 'वरुणः पश्चिमे भागे' इति ब्रह्मयामलाच्च ।

**महर्लोको ग्रीवा ॥ ४४ ॥**

स्वर्लोकसन्निहितोर्ध्ववर्त्तित्वात् । 'ग्रीवा महः' इति भागवताच्च ।

**तत्रानाहत एव नादः ॥ ४५ ॥**

ताल्वोष्ठपुटव्यापाराद्यनपेक्षत्वसाम्यात् । नादो द्विविधः, आहतोऽनाहतश्च 'तत्रैश्वरोऽनाहतो जैव आहतः' इति सामोपवेदाच्च ।

**जनलोको वदनम् ॥ ४६ ॥**

महर्लोकोद्ध्वत्वसान्निध्यसाम्यात् 'वदनं वैजनमस्येति' इति श्रीभागवताच्च ।

**कामश्चिबुकम् ॥ ४७ ॥**

पुरुषकामव्यञ्जकश्मश्रुभूमित्वात् 'जाभुके श्मश्रुताचिह्नं षण्ढे ह्यश्मश्रुता तथा' इत्यादिकामशास्त्राच्च ।

---

दक्खिन उत्तर जे ध्रुव दोऊ, स्वर्गलोक ऊपर रह सोऊ ।
दहिने बायें कन्ध समाना, ब्रह्मयामलक ताहि बखाना ॥ ४२ ।
बरुनहि ककुन् और सो कहई, दूनो ध्रुव बीचे वह रहई ।
जतो वरुन पच्छिम दिग् नाथा, ब्रह्मयामलक गावै गाथा ॥ ४३ ।
महर्लोक है ग्रीवा ताकी, स्वर्गलोक से ऊपर थाकी ।
ग्रीवा महर्लोक विख्याता, कहै भागवत यह सब बाता ॥ ४४ ।
तहाँ अनाहत नाद, तालु ओठ पुट कर्म तजि ।
दुइ विध नाद प्रवाद, आहत और अनाहतहु ॥
तहाँ अनाहत ईश्वर नादा, साहत नाद जीव कर वादा ।
भाषत ताहि साम उपवेदा, समुझि लिये पर रहै न खेदा ॥ ४५ ।
जन लोकहि जानहु बदन, महरलोक उपराय ।
कहै भागवत मध्य तहँ, जन लोकहि मुख गाय ॥ ४६ ।
ताके चिबुक समान, कामदेव नहिं आन कछु ।
दाढ़ी मोछ निदान, पुरुष काम व्यञ्जक उगे ॥
ताहि नपुंसक जान, जहाँ न दाढ़ी मोछ है ।
कामशास्त्र परमान, होत पुरुष में श्मश्रुता ॥ ४७ ।

लोभोऽधरः ॥ ४८ ॥

काममूलत्वाल्लोभस्य चिबुकमूलत्वादधरस्य 'अधर एव लोभः' इति श्रीभागवताच्च ।

लज्जोत्तरोष्ठः ॥ ४९ ॥

लोभस्नेहाद्याच्छादकत्वसाम्यात् 'व्रीडोत्तरोष्ठः' इति श्रीभागवताच्च ।

पुत्रादिस्नेहा दन्ताः ॥ ५० ॥

जर्जरीकरणसाम्यात् 'स्नेहकला द्विजानि' इति श्रीभागवताच्च ।

यमो दंष्ट्राः ॥ ५१ ॥

सञ्चूर्णनीकरणत्वसाम्यात् 'द्रंष्ट्रा यमः' इति श्रीभागवताच्च ।

आपस्तालुः ॥ ५२ ॥

स्रवन्ती नाडिका तालु सङ्गता वारुणी सदा ।
रसस्य जलमूलत्वाद्रसना तेन हेतुना ॥

इति योगभाष्यात् ।

अग्निर्जिह्वा ॥ ५३ ॥

सर्वरसभुक्त्ववर्णाकारादिसाम्यात् 'हव्यकव्यामृतान्नानां जिह्वा सर्वरसस्य च' इति श्रीभागवताच्च ।

---

लोभ अधर कहि मान, काममूल वह होत है ।
लोभैं चिबुक निदान, लोभ अधर व्यासहु गहत ॥ ४८ ।
लज्जा ऊपर ओठ, लोभ नेह वह छोपि रह ।
व्रीडा उत्तर ओठ, ऐसं भागवतो कहै ॥ ४९ ।
पुत्र आदि कै नेह है, तिन विराटको दन्त ।
दूनों जजर करत हैं, कहेउ व्यास भगवन्त ॥ ५० ।
यमदंष्ट्रा चौघट वह आनो, चूरन करन साम्य तहँ मानो ।
दंष्ट्रा जम भागवत बतावैं, पानी तालु थान अपनावैं ॥ ५१ ।
झरै नाडिका वारुनी, तालु संगता होय ।
जल मूलक रस होत हैं, रसना कारन सोय ॥ ५२ ।
जोग भाष्य से देत प्रमाना, अग्नि देवता जिह्वा माना ।
रंग रूप सम सब रस भोगी, हव्य कव्य अमृतहु संजोगी ॥
जिह्वा सब रस चाखनहारी, यथा अग्नि वह व्यास विचारी ॥ ५३ ।

## रसतन्मात्रं रसनेन्द्रियम् ॥ ५४ ॥

प्रमादिजीवशरीरादीनामास्वादकत्वात्, सर्वरसमूलत्वात् 'आपोऽस्य तालू रस एव जिह्वा' इत्यादिश्रीभागवताच्च ।

## सरस्वती वागिन्द्रियम् ॥ ५५ ॥

जगद्वचोऽधिष्ठातृदेवतात्वसाम्यात् 'जिह्वा देवी सरस्वती' इति हरिवंशात्, 'वागीशा यस्य वदने' इति प्रह्लादपञ्चरात्राच्च ।

लौकिकालौकिकसत्यवचनानि शब्दः 'एषु तु वा अति वदति यः सत्येनातिवदति' इति श्रुतेः । 'अस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदो यजुर्वेदोऽथर्वाऽङ्गिरस इतिहासः पुराणम्' इत्यादि श्रुतेः । निःश्वसितं तत्पूर्वकः शब्द एव ।

## माया हास्यम् ॥ ५६ ॥

प्रभूणामन्यथा वाग्व्यवहारादिसंवलितोपहासेनानभिज्ञानां चित्तविक्षेपकत्वसाम्यात् 'हास्यं जनोन्मादकरी च माया' इति श्रीभागवताच्च ।

## जृम्भादयो भूता जृम्भाः ॥ ५७ ॥

विकृत चेष्टाकर्त्तृत्वसाम्यात् ''जृम्भादयो विजृम्भाः स्युः' इति वायुपुराणाच्च ।

---

रसनेन्द्रिय है रसतन्मात्रा, चखे प्रमादि जीव समगात्रा ।
अपोऽस्य तालु रस जिह्वा, भाष्यो महाभागवतादि प्रह्वा ॥
जिह्वा के दुइ काम हैं, रस चीखव अरु बोल ।
रसनागुन बरनन किये, बोली चोली खोल ॥ ५४ ।
बचनेन्द्रिय है सुरसती, बानी जग की सोय ।
जिह्वा देवी सरसुती, कह हरिवंशहु जोय ॥
वागीश्वरी वदन है जासू, प्रह्लादपञ्चरात्र प्रकासू ।
लौकिक सत्य अलौकिक बानी, शब्दहि के गुन जाती जानी ।
कहे वेद यह जो कछु बोलै, सत्य भरोसे बचनहि खोलै ।
महापुरुष के यह निःश्वासा, वेदचार पुरान इतिहासा ।
तहँ निश्वास अर्थ यह होई, साँस समेत शब्द है सोई ॥ ५५ ।
माया हँसी विराट् प्रभुकेरी, जिमि प्रभुजन उपहास घनेरी ।
करै चित्त विच्छेपहि तैसे, अनजानतकर होवहि जैसे ।
जन उन्मादकरी यह माया, हँसी ताहि भागवत बताया ॥ ५६ ।
जृम्भादिक जे भूतगन, वे ही जृम्भा होत ।
चेष्टा विकृत बनाइ कै, मुँह बावत मन गोत ॥
जृम्भादिक ही होव हैं, तहाँ विजृम्भन वान ।
वामें देत प्रमान यह, वायु महा पुरान ॥ ५७ ।

**अगस्तियमौ दक्षिणवामगल्लौ ॥ ५८ ॥**

अगस्तेः समुद्रपायित्व-वातापिभक्षकत्वसाम्यात्, यमस्यापि जगद्भक्षकत्वात् 'कालो जगद्भक्षकः' इत्यादिपद्मपुराणीयवाक्याच्च ।

**पश्चिमार्धभागसहिते दक्षिणोत्तरदिशौ कर्णौ ॥ ५९ ॥**

कर्णाभ्यामाकाशावच्छेदकत्वसाम्यात् 'कर्णौ दिशः श्रोत्रममुष्यशब्दः' इति श्रीभागवताच्च ।

**शब्दतन्मात्रं श्रवणेन्द्रियम् ॥ ६० ॥**

'श्रोत्रममुष्यशब्दः' इत्यादिश्रीभागवतात् ।

**नासत्यौ नासे ॥ ६१ ॥**

सौन्दर्यसाम्यात्, प्राणायाम-स्वराभ्यास-शङ्खोदकाभ्यासैं रोगनाशस्य दर्शनात् 'नासत्यदस्रौ परमस्य नासे' इति श्रीभागवताच्च ।

**गन्धतन्मात्रं घ्राणेन्द्रियम् ॥ ६२ ॥**

यावद्गन्धमूलत्वात् 'घ्राणोऽस्य गन्धः' इति श्रीभागवताच्च ।

**वायुर्निःश्वसितम् ॥ ६३ ॥**

सर्वेषां जीवनस्य तद्धेतुत्वात् 'सर्वासूनाञ्च वायोश्च तन्नासे परमायने' इति श्रीभागवताच्च ।

---

मुनि अगस्त जमराजहु दोऊ, दाहिन बाम गाल सम होऊ ।
बातापी भच्छक मुनिराया, पीयत सागर उनहि सुहाया ॥
हैं यमराज सकल जगभच्छी, उनते को जग जीव सुरच्छी ।
जग भच्छक है एकहि काला, पदुम पुराने वाक्य निराला ॥ ५८ ।
पच्छिम आधे भाग मिलाना, दक्खिन उत्तर दिस दुहु काना ।
कारन तहाँ बतावत काना, दूनो होत अकास समाना ॥
कानै दिसा श्रोत्र आकासा, महाभागवत शब्द प्रकासा ॥ ५९ ।
होत शब्दतन्मात्र ही, श्रवणेन्द्रिय प्रभुकेर ।
कह्यो भागवत पूर्व ही, श्रोत्र शब्द है फेर ॥ ६० ।
हैं नासा अश्विनी कुमारा, दूनो मंह सुन्दरता भारा ।
प्रानायामहि स्वर अभ्यासे, संखोदक ते रोग बिनासे ॥ ६१ ।
नासत्यौ नासा कहत, श्रीभागवत पुरान ।
तहाँ गन्ध तन्मात्रको, भाषत इन्द्रिय घ्रान ॥ ६२ ।
घ्रानहि गन्ध कहे मुनि व्यासा, सकल गन्ध कै वह जड़ खासा ।
है बिराट् कर बायू साँसा, सबके जीवनकर वह आसा ॥
बायु कहे सब प्रान गवावैं, परमायन भागवत बतावैं ॥ ६३ ।

**जनतपसोर्मध्ये यदन्तरिक्षं तदेव भागद्वयेन दक्षिणवामाक्षिणी ॥ ६४ ॥**

'अन्तरिक्षमक्षिणी' इति श्रुतेः ।

**आदिसूर्यश्चक्षुः ॥ ६५ ॥**

वैकारिकसृष्टावादिसूर्यस्य सम्भवात्—'चक्षुर्विश्वरूपः' इत्यादिश्रुतेश्च ।

**ब्रह्मणो रात्र्यहनी निमेषोन्मेषौ ॥ ६६ ॥**

जगतोऽदर्शनदर्शनत्वसाम्यात्—'चित्तोन्मेषनिमेषाभ्यां संसारप्रलयोदयौ' इत्यादिवशिष्ठाच्च ।

**दुरन्तसृष्टिः कटाक्षः ॥ ६७ ॥**

दिनस्योन्मेषत्वादस्मिन्नेव सृष्टिनियमादुन्मेषाव्यवहितोत्तरक्षणे ईषद् दृष्टिपातात्—'दुरन्तसृष्टिर्यदपाङ्गमोक्षः' इति भागवताच्च ।

**मित्रत्वष्टारौ भ्रुवौ ॥ ६८ ॥**

मेहति सेचतीति मित्रः, त्वक्ष्णोति तनूकरोतीति त्वष्टा, इति योगलक्षणया तयोः क्रमेण स्नेहक्रोधाधिष्ठातृदेवतात्वात्, तयोश्च भ्रूभ्यामुपलभ्यमानत्वात्—'तद्भ्रूविजृम्भः परमेष्ठिधिष्ण्यम्' इति श्रीभागवताच्च ।

---

जन औ तप के मध्य में, रहत जौन आकास।
दहिनी बाँयी आँखि सो, करि दुइ भाग प्रकास ॥ ६४ ।
कहैं वेद भगवान्, आदि सूर्य ही चक्षु हैं।
जब विकार सिरजान, पहिले भये दिवाकरहि ॥ ६५ ।
चख को विश्वरूप श्रुति कहई, प्रभु कै आँखि सूर्य ह्वै रहई।
ब्रह्मा कै जो दिन अरु राती, है उन्मेष निमेष लखाती ॥
जग कै दरस अदर्सन होई, ताते समता पावत सोई।
चित्तोन्मेष निमेष ते, जग कै सृष्टि निवास।
कहै योगवासिष्ठ से, रामानन्द निकास ॥ ६६ ।
होवै दुरन्त सृष्टि कटाछा, दिन में सृष्टि नियम कै काछा।
खुलत दृष्टि उत्तर छनमाहीं, जब कछु झँपै ताहि बतलाहीं ॥
'दुरन्तसृष्टिर्यदपाङ्गमोक्षः' श्रीमन्महाभागवत प्रमाणम् ॥ ६७ ।
मित्र त्वष्टा भ्रुव हैं दोऊ, महकै सेचन अर्थ न गोऊ।
ताते मित्र एक पहिचानो, छोट (तनु) करै से त्वष्टा जानो ॥
जोग लच्छना तें ये दोऊ, स्नेह क्रोध के स्वामी होऊ।
दूनों भ्रूगत प्रकट दिखाते, तँह प्रमान भागवत बताते ॥ ६८ ।

**तपो ललाटम् ॥ ६९ ॥**

जनलोकोपरिसन्निहितत्वात्, तेजस्वित्वसाम्यात्—'तपो रराटीं विदुरादिपुंसः' इति श्रीभागवताच्च ।

**सत्यलोकः शिरः ॥ ७० ॥**

तपोलोकोपरिसन्निहितत्वात् 'सहस्रशीर्षा पुरुषः' इत्यादि श्रुतेः । 'सत्यं तु शीर्षाणि सहस्रशीर्ष्णः' इत्यादि श्रीभागवताच्च । बहुत्वमानन्त्याभिप्रायेण—'मूर्द्धैव सुतेजा' इत्यादौ सामवेदे एकत्वस्यैवाभिधानात् । सुतेजाः शोभनतेजस्वी सत्यलोक एव ।

**मेघाः केशाः ॥ ७१ ॥**

महाप्रलयकर्तॄणां मेघानां सर्वोपरिवर्तमानत्वसाम्यात् । श्यामत्वाधोलम्बित्वसाम्यात्—'ईशास्य केशान् विदुरम्बुवाहान्' इत्यादिश्रीभागवताच्च ।

**उपनिषदो ब्रह्मरन्ध्रम् ॥ ७२ ॥**

अनाहतस्य सुषुम्णायाश्च ब्रह्मरन्ध्रपर्यन्तसञ्चारादुपनिषदाञ्च ब्रह्मप्राप्तिद्वारत्वात्—'शतं च एका च हृदयस्य नाड्यः, तासां मूर्द्धानमभिनिःसृतैका तस्योर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' इति श्रुतेः । 'छन्दांस्यनन्तस्य शिरो गृणन्ति' इति श्रीभागवताच्च छन्दांसि वेदभागरूपा उपनिषदः शिरो ब्रह्मरन्ध्रम् ।

---

है विराट् ललाट तप लोका, जाके निकट तरे जन लोका ।
अतिशय तेज तहाँ परकासै, 'तपहि रराटि' भाषत व्यासै ॥ ६९ ।
सत्यलोक सिर तासु, तप के ऊपर संनिहित ।
कहै वेदहू जासु, हैं हजार सिर यै पुरुष ॥
सीस सहस्र शीर्ष कै सत्यै, अभिप्राय तहं यह सब गत्यै ।
जो बहुत्व आनन्त्य दिखावा, मूर्धा सत्य सुतेजा गावा ॥
सामवेद जो एक बतायो, सत्यलोक तेजस्वी गायो ॥ ७० ।
मेघवृंद हैं केस सब, करते प्रलय कठोर ।
सबके ऊपर रहत हैं, काले लटकत छोर ॥
कहत ईश के केश हैं, अम्बुवाह घनघोर ।
जिहि लखि नाचत व्यास कै, नीलकण्ठ मनमोर ॥ ७१ ।
ब्रह्मरन्ध्र उपनिषद् बखानी, तहँ लगि जात अनाहत बानी ।
होत सुषुम्ना कर संचारा, वाही ब्रह्म प्राप्ति कै द्वारा ॥
हृदय बसंत एकसै एका, नाडी तहँ इक ऊपर फेंका ।
ताते गये अमृत पद पावै, इत उत दूसरि लै ढुलकावै ॥
कहै वेद यह अद्भुत बाता, यामे संशय किंचि न माता ।
छन्दै शिर अनन्त कै भाखै, वेदव्यास मुनीश सुराखै ॥
वेद भाग उपनिषद्-बखाने, ब्रह्मरन्ध्र ताते वे माने ॥ ७२ ।

ओषधयो महीरुहास्तनूरुहाः ॥ ७३ ॥

सर्वलोकेषु वर्तमानत्वसाम्यात्—'नद्योऽस्य नाड्योऽथ तनूरुहाणि महीरुहा विश्वतनोर्नृपेन्द्रः' इत्यादिश्रीभागवताच्च ।

लक्ष्मीः शरीरशोभा ॥ ७४ ॥

शोभाधिष्ठातृदेवतात्वात्—

यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम ।
नित्यैव सा जगन्माता विष्णोः श्रीरनपायिनी ॥

इति विष्णुपुराणात् ।

देवत्वे देवदेहे यं मनुष्यत्वे च मानुषी ।
विष्णो रूपानुरूपाच्च करोति ह्यात्मन स्तुतिम् ॥

इत्यागमाच्च ।

भूताकाशो देहरन्ध्राणि ॥ ७५ ॥

भूतानां छिद्रदातृत्वं बहिरन्तरमेव च ।
प्राणेन्द्रियात्मधिष्ण्यत्वं नभसो वृत्तिलक्षणम् ॥

इति श्रीभागवताच्च ।

---

ओषधि सम महिरुह समुदाया, होहिं तनूरुह लोम बताया ।
कारन सकल लोक में होते, तैसहि लोम छेद भर पोते ॥
नदी नाडियाँ होति हैं, महिरुह तनुरुह (वृक्ष लोम सम) तासु ।
विश्वरूप भगवन्त के, कहत भागवत व्यास ॥ ७३ ।
हैं लच्छमी देह की सोभा, जाहि विलोकि सबै मन लोभा ।
वही स्वामिनी शोभा केरी, विष्णुपुरान बचन सुनु फेरी ॥
जथा सर्वगत विष्णु हैं, तैसहि ताहू जान ।
जग जननी वह नित्य ही, रमा राम (विष्णु) सम मान ॥
देवरूप में देवता, मनुज भये मनुजात ।
विष्णुरूप अनुरूप तन, करती आपनि मात ॥
अस कहि आगम भेद बतावै, ताते श्री शोभा पद पावै ॥ ७४ ।
देह रन्ध्र सब भूत अकासा, करैं छिद्र लसि भूत निवासा ॥
भूत छिद्र करि देत हैं, भीतर बाहर होय ।
प्राणेन्द्रियात्मधैष्ण्यत्वं नभोवृत्ति है सोय ॥ ७५ ।

## चिदाकाश आत्मा ।। ७६ ।।

सच्चिदानन्दरूपत्वात्—'आकाशशरीरं ब्रह्म' इत्यादि 'सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते । आकाशेन जातानि जीवन्ति । आकाशं प्रत्यभिसंविशन्तीति' इति श्रुतेः ।

## मनुजो निवासः ।। ७७ ।।

मनुष्येपूपलभ्यमानत्वात्—'मनुष्यत्वे चाविस्तरामात्मा' इति श्रुतेः । 'मनुर्मनीषा मनुजो निवासः गृहं शरीरं मानुष्यम्' इत्यादिस्मृतेश्च ।

## जीवभोगो भोगः ।। ७८ ।।

सर्वान्तरयामित्वात्, भोगस्य चैतन्यपर्यवसानात्—

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥

इति श्रीभगवद्गीतायाश्च । वैश्वानरः साधारणशब्दविशेषात् ।

(क) इत्येतस्मिन्नधिकरणे 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ'

---

कहत आतमा चिद आकासा, सत चित आनँद रूप प्रकासा ।
ब्रह्म अकास सरीर बुलावै, एक ब्रह्म खं ब्रह्म कहावै ॥
सबै भूत अकास उपजावे, करि उतपन्न अकास जिआवे ।
पुनि अकास में सब हि समावैं, ये सब बचन वेद ही गावैं ॥ ७६ ।

मानुष तासु निवास, मनुजन में मिलिजात वह ।
वेदैं भेद प्रकास, है मनुष्यता आतमा ॥
मनू मनीषा मनुजे वासा, गृह शरीर मनुज स्मृतिभासा ॥ ७७ ।

जीव भोग भोग है ताको, अन्तर्यामि भोग चित जाको ।
वैश्वानर रूप धरे हमहीं, सब प्रानिन के तन माँह रहैय्या ।
प्रान अपान समान किये, हम भीतर चौविध अन्न पचैय्या ॥
श्रीमुखसे भगवन्त कह्यो, सब और प्रमान भले बतवैय्या ।
वैश्वानर शब्द सधारन तें, कछु बात विशेष इहाँ समुझैय्या ॥ ७८ ।

यही विषय में वेद की, ऋचा विचारी जात ।
वहे आतमा आप ही, वैस्वानर ही रुयात ॥
ताके मूर्धा तेजमय, विस्वरूप ही चक्ष ।
प्रान पृथक् वरमा कहे, सकल देह अन्तरीक्ष ॥
अधोभाग जो नाभि के, रयी वही है तासु ।
भूमी ही पदयुगल है, श्रुति विचार यह भासु ॥

इत्यादि श्रुतेर्विचारे—अत्र हि परमेश्वर एव द्युमूर्द्धत्वादिविशिष्टोऽवस्थान्तरङ्गतः प्रत्यगात्मत्वेनोपन्यस्त आध्यानायेति गम्यते, कारणत्वात्। कारणस्य हि सर्वाभिः कार्यावस्थाभिरवस्थावत्वात्।

(ख) तत्रापीदं मायिकं माया वा ब्रह्म वेति विचार्यते। तत्रापवाद्यमाद्यम्, न ध्यानार्हं 'आध्यानाय' इति वाचस्पति-कल्पतरु-परिमलादौ निश्चितत्वात्। अतो ह्यनादिमायेश्वरेच्छैवेश्वरमूर्त्तिः, आकाश एव 'तदोतं च प्रोतं च' इत्यादि श्रुतेः। आकाशोऽत्राव्याकृतम्—

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया॥

इत्यादिश्रीभगवद्वाक्याच्च।

(ग) उक्तञ्च भाष्यकारेण—स च भगवान् स्वां वैष्णवीं मायां प्रकृतिं वशीकृत्य अजोऽव्ययो भूतानामीश्वरो नित्य-शुद्ध-बुद्ध-मुक्तस्वभावोऽपि सन् स्वमायया देहवानिव

---

याते यह परमेश्वरै, गगन (अगिन) दीपंता युक्त।
स्वयं अवस्था अन्य लहि, अन्तरातमा उक्त॥
कारन तहँ नहि अन्य कछु, ध्यानगम्य बनि जात।
सर्वं अवस्था कार्य की, कारन को प्रकटात॥
यह शारीरिक भाष्य मत, कहेउ भले समुझाय।
याते ईश्वर निर्गुनै, सगुन रूप दरसाय॥ (क)।
मायिक माया ब्रह्म है, यह विचार पुनि कीन्ह।
तहाँ प्रथम अपवाद्य है, मावत ध्यान न लीन्ह॥
कबहूँ मायिक है नहीं, नहीं ध्यान में चीन्ह।
वाचस्पति अरु कल्पतरु, परिमलहू कहि दीन्ह॥
तब अनादि मायेश्वरहि, इच्छा ईश्वर मूर्ति।
ओत-प्रोत आकाश है, श्रुति के बचनै स्फूर्ति॥
यद्यपि जन्म होत नहि मोरा, अव्यय आतम अहहूँ।
सब भूतन कै ईश्वर हौ कै, जब ही इच्छा करहूँ॥
लहि कै अपनी प्रकृती को तब, आतम माया द्वारा।
धरौं रूप जनमें सब जानै, यह भगवन्त उचारा॥ (ख)।
वहाँ भाष्यकार अस भाषै, जब भगवान् स्वप्रकृति मुरारी।
बस करि वैष्णव माया तबहीं, जब अव्यय भूतेश्वर सबहीं॥
नित्य शुद्ध बुद्ध वह देवा, मुक्त स्वभाव रहहिं नहि भेवा।
पर निज माया बस वह होई, धरत देह जनमत जस कोई॥

जात इव च लोकानुग्रहं कुर्वंल्लक्ष्यते। स्वप्रयोजनाभावेऽपि भूतानुजिघृक्षयेति। आनन्दगिरिणा च स्वेच्छाविनिर्मितेन मायामयेन दिव्येन रूपेण सम्बभूवेति, न ह्येतावता द्वैतापत्तिः, निस्तरङ्ग-सतरङ्गजलस्य भेदादर्शनात्।

निस्तरङ्गावस्थायां शक्तिप्रतियोगिकभेदाभावात्, सतरङ्गावस्थायामपि तरङ्गादिप्रतियोगिकभेदाभावाच्च। अत एव—

(घ) नित्यो यः कारणोपाधिर्मायाख्योऽनेकशक्तिमान्।
स एव भगवद्देह इति भाष्यकृतां मतम्॥

अन्ये तु महेश्वरे देह-देहिभावं न मन्यन्ते; किन्तु य एव नित्यो विभुः सच्चिदानन्दघनो भगवान्, स एव तद्विग्रहो नान्यो मायामायिको वा। 'अविनाशी वा अयमात्मानुच्छित्तिधर्मः', 'आकाशशरीरं ब्रह्म' इत्यादिश्रुतेश्च।

(ङ) 'स भगवः कस्मिन् प्रतिष्ठितः स्वे महिम्नि' इत्यादिश्रुतेः। 'यस्य विश्वात्मकत्वेऽपि खण्ड्यते नैकपिण्डता' इत्यादि।

---

सकल लोक पर दया दिखावत, नाहि प्रयोजन आपन भावत।
केवल भूत अनुग्रह लागी, कह आनन्द ज्ञान बैरागी॥
निज इच्छा निर्मित तनू, मायामय भगवन्त।
दिव्य रूप धरि जब भये, तब नहिं द्वैत बदन्त॥
निस्तरंग सतरंग जल, एक होत नहि भेद।
जहाँ शक्ति प्रतियोग बश, भेद भाव तजि खेद॥ (ग)।
नित्य शुद्ध बुद्ध निरुपाधी, कारन बस सो लहत उपाधी।
सर्व शक्तिमान् है जोई, भगवत देह होत है सोई॥
भाष्यकार सब यही बखानें, अन्य अचारज यह नहिं मानें।
महामहिम्न महेश्वर माँही, देह-देहि भावहु है नाहीं॥
किन्तु जौन विभु नित्य अनन्ता, सत चित आनँद घन भगवन्ता।
तौने ताकर विग्रह होई, माया मायिक अन्य न कोई॥
अबिनाशी यह आतमा, उच्छित्ति धर्म विहीन।
ब्रह्म अकास शरीर है, यह सब श्रुति कहि दीन॥ (घ)।
कहाँ प्रतिष्ठित हैं भगवन्ता, निज महिमा में कह श्रुति सन्ता।
जाके विश्वात्मक भये, एक पिण्डता तासु।
कबहूँ खण्डित होति नहिं, यह विचित्रता जासु॥
सर्वस शक्ति अनन्त कै, मन है जगत बिलास।
उठत समुद्र तरंग ते, जल न हि रज परिभास॥
यह वशिष्ठ कै वचन हैं, भली भाँति मन देहु।
सकल विचार निचोरिकै, वेद वाक्य सुनि लेहु॥

सर्वशक्तेरनन्तस्य विलासो हि मनो जगत् ।
तरङ्गाग्रगणैरम्भः सिन्धोः स्फुरति नो रजः ॥

इत्यादिवशिष्ठाच्च ।

ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद ।
क्षत्रं तं परादाद्योऽन्यत्रात्मनः क्षत्रं वेद ॥
लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान् वेद ।
देवास्तं परादुर्योऽन्यत्रात्मनो देवान् वेद ॥
भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद ।
सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद ॥

इत्यादिव्यतिरेकभावननिन्दावद् यजुर्वेदेनापि । 'एतदात्म्यमिदं सर्वं तत्सत्यम्' इत्यादिना च । अनिर्देश्यवपुषस्तीर्थकोटिसमाह्वयस्यानुसन्धानमेवोक्तमिति ।

॥ इति श्रीनित्यातिशयषडैश्वर्यसम्पन्नश्रीसाहविलंद-इकबालमहम्मद्दाराशकोह-
सर्वप्राणिपुञ्जप्रकर्षप्रोद्भूतसत्सन्तानाखण्डमण्डलधरणिधरनियुक्तश्रीमद्-
रामानन्दसूरिणा विरचितं 'विराड्विवरणम्' सम्पूर्णम् ॥

॥ संवत् १७१३ वैशाखे मासि शुक्लपक्षे त्रयोदश्यां शनौ ॥

❀ शुभम् ❀

---

ब्रह्म ताहि ते दूर पराना, आतम भिन्न ब्रह्म जो जाना ।
क्षत्र ताहि ते दूर पराना, आतम भिन्न क्षत्र जो जाना ॥
लोक ताहि ते दूर पराने, आतम भिन्न लोक जो जाने ।
देव ताहि ते दूर पराने, आतम भिन्न देव जो जाने ॥
भूत ताहि ते दूर पराने, आतम भिन्न भूत जो जाने ।
सबहि ताहि ते दूर पराना, आतम भिन्न सर्व जो जाना ॥
यह व्यतिरेक भावना होई, निंदा सम भाषत श्रुति गोई ।
यजुर्वेदहू से संमत्यं, एतदात्म्य यह है सब सत्यम् ॥
अनिर्देश्य वपु ब्रह्म कै, कोटि तीर्थ सम नाम ।
तिहिकर अनुसन्धान कहि, लहत जीव विश्राम ॥

विद्वद्वृन्दधुरीणधीरसरयूपारीणवंशोद्भवो-
रामानन्दसुधीर्विराड्विवरणं यन्निर्ममौ सुन्दरम् ।
तद्भूपत्यान्वयजेन तस्य च मया भाषानुवादः कृतः
तस्मा एव समर्प्यते स्वगुरवे प्रीणातु मत्पूर्वजः ॥ १ ।
रामानन्दकुलोत्पन्न नारायणपतेः कृतः ।
भाषानुवादः सम्पूर्णः षडष्टाङ्केन्दु (१९८६) वैक्रमे ॥ २ ।

॥ इति शम् ॥

# परिशिष्टम्-१

श्रीमत्सरयूपारीणमहाकुलीनपण्डितधुरीणविविधविद्याचमत्कारपारङ्गमत्रिपाठि-
श्रीरामानन्दशर्मप्रणीतानि कतिपयस्तोत्राणि

* * *

१. श्यामास्तवराजः

२. बगलामुखीस्तवराजः

३. विन्ध्यवासिनीकल्पद्रुमस्तोत्रम्

४. देवीस्तवराजः

५. रुद्रताण्डवम्

६. चतुर्भुजाष्टकम्

• • •

॥ श्रीगणेशाय नमः ॥

# अथ श्यामास्तवराजः

❀ ❀ ❀

धातारं कालि! तालीसुरपतिशशिभिर्भूषितं बीजमेत-
द्ये त्वामिन्दीवराभां भगवति हृदये भावयन्तो भजन्ति।
तेषां सद्यो मुखाग्रात्प्रसरति कविता गद्यपद्यानवद्या
वाग्देवी वक्त्रपद्मे निवसति कृतिनामिन्दिरा मन्दिरेषु ॥ १ ॥
वाराहं वह्निवामश्रुतिशशिललितं तद्वयं गुह्यगुह्यं
बीजद्वन्द्वं तदेतत्तव जननि घनश्यामले ये जपन्ति।
तेषां विद्वेषिवर्गः प्रभजति निधनं घोरनादे विवादे
जित्वा ते वादिवृन्दं सपदि जगदिदं स्वस्य वश्यं नयन्ति ॥ २ ॥
ताली गोविन्दचन्द्रान्वितमनिलललितं कामगं बीजमेत-
त्त्रिःकृत्वा घोरदंष्ट्रे जननि घननिभे कालिके ये जपन्ति।
तेषां गङ्गातरङ्गावलिरिव तरगा देवि चन्द्रार्द्धचूडे
सद्यो वैदग्ध्यमुग्धा निजगुरुकमलाच्चाटु निर्यान्ति वाचः ॥ ३ ॥
वह्निस्थं यादवेशं शशधरकलया वामनेत्रेण जुष्टं
पश्चादर्वीशसोमान्वितमनिलललितं वामपादं विभाव्य।
ईशं गोविन्दचन्द्रानलकलितमथो योजयित्वा स्वमन्ते
मातर्मन्त्रं तवैतत्त्रिभुवनजनतावश्यकृत्साधकानाम् ॥ ४ ॥

---

मेलि ककार रेफ ईकारं, चन्द्रबिन्दु दै बीज सुधारं।
नील कमल सम मूरति तोरी, काली मन धरि जपै बहोरी॥
कविता गद्य-पद्य रस घोरी, ताके मुखते कढ़ै अथोरी।
करै सारदा मुख में बासू, तजहि न लछिमी तिहिकर पासू॥ १।
मिलत हकार रेफ पै ईके, जबही बिन्दु लगावै।
यह तुव बीज गुह्य अति होई, दुय दुय करि जपि जावै॥
ताके शत्रु निधन ह्वै जावैं, वादी तुरतहि हारैं।
मातु कालिके! ये सब साधक यह जग बसकरि डारैं॥ २।
जहाँ ककार में लगै लकार, ई पै बिन्दु धरै ते।
विकट दंतवाली श्रीकाली त्रिगुनित बीज जपै ते॥
ताके मुखते गंग-लहर सम निकसै बानी-धारा।
चन्द्रकला धारिनि जगदम्बे! अति वैदग्ध-विहारा॥ ३।
बीज तीनहू एक ठौर करि पुनि फटकार लगावै।
तब तुव मन्त्र बनै वहि माई! जो वह सिद्ध कहावै॥
ताहि जपै जो अधिक चित्त दै, शंभु विलासिनि देवी।
सो त्रिभुवन को बस करि राखै, सत्य तोर पद सेवी॥ ४।

वर्गाद्यंर्वह्निशान्तीन्दुभिरतिललितं त्रिःकृतं लोलजिह्वे !
पश्चात्फट्कारमुग्रे तदनु हरवधु ! प्रोद्धरेदग्निजायाम् ।
एतन्मन्त्रस्य जापाज्जननि जडधियामप्यनेके मुखाग्रा-
दाविर्भावं भजन्ते नवरसरुचिरा गद्यपद्यप्रवाहाः ॥ ५ ॥

वामे पाणौ कृपाणं विकटनरलसच्छिन्नमुण्डं दधाना-
मूर्ध्वाधोदक्षपाणावभयवरवतीमम्बुदश्यामलाङ्गीम् ।
दिग्वस्त्रां घोरदंष्ट्रोत्कटरुचिरगलद्रक्तधाराकरालां
वन्दे कालीं सकालां स्मितमुदितमुखीं बिभ्रतीं मुण्डमालाम् ॥ ६ ॥

कालव्यालोपवीतां शवकरनिकराबद्धकाञ्चीं शवास्थि-
भ्राजत्केयूरशङ्खोत्कटवलयलसद्बाहुदण्डां प्रचण्डाम् ।
मांसग्रासोत्सुकास्यां कुणपमपि ललज्जिह्वया लेलिहानां
वन्दे घोरैः किशोरैः श्रुतियुगविलसद्बालकर्णावतंसाम् ॥ ७ ॥

फेत्कारैर्भीषणाभिर्दिशि दिशि परितः फेरवीभिः परीतां
मा भैर्मा भैरितीदृग्वचनमविरतं साधकेभ्यो वदन्तीम् ।
त्रैलोक्यं त्रासयन्तीं कहकहकहकैश्चण्डहासैर्हसन्तीं
दुष्टान्सन्तर्जयन्तीं विगलितकबरीं कालिकां भावयामि ॥ ८ ॥

---

जबै ककार में रेफ लगाई, ई पै बिन्दु देवै ।
तब तुव मन्त्र त्रिगुन करि पाछे, फट् अरु स्वाहा सेवै ॥
चंचलजिह्वे ! जपै मन्त्र यह जो जड़बुद्धि कोई ।
ताके मुखते नव रस धारा गद्य-पद्य उपजोई ॥ ५ ।
ऊपर बायें हाथ में, लसत कृपान विसाल ।
ताके नीचे विकट नर, छिन्न (कटा) मुंड विकराल ॥
दाहिन दूनों करन में, अभय तथा वर सोह ।
अंबुद स्यामल अंग सब, रहति दिगम्बर बोह ॥
घोर दंष्ट्र उत्कट रुचिर, बहत रक्त की धार ।
वन्दौं काली स्मित मुखी, पहिने मुंडन हार ॥ ६ ।
काल व्याल उपवीत दधाना, रसना शवकर निकर विधाना ।
मुरदा हाड़ बिजायठ कीन्हें, उत्कट शंख कटक भुज दीन्हें ॥
मांस चबाति कुणपको चाटै, घोर किशोर करन जुग साटै ।
लपलपाति रह जिह्वा नीकी, प्रनवौं पद रज काली जीकी ॥ ७ ।
अति भयंकर फेंकरत स्यारिन जाके चहुँदिसि घेरैं ।
'मत डर मत डर' ऐसी बानी, साधक जनते टेरैं ॥
सब त्रैलोक्य त्रास उपजावति कहकहाय के हँसती ।
बन्दौं काली जूरा खोलै, दुष्टन को धरि धँसती ॥ ८ ।

सर्वालङ्कारयुक्तां नवजलदनिभां पीनवक्षोनितम्बां
राजत्सिन्दूरपूरां पट्टविकटजटां प्रोल्लसच्चन्द्रचूडाम् ।
तल्पस्थां वैपरीत्यं शवहृदि सुरते देवदेवेन सार्द्धं
सानन्दं भावयन्तीं शवभवनगतां भद्रकालीं भजामि ॥ ९ ॥
शवानां दोर्वल्लीकृतरुचिरकाञ्चीं श्रुतिलस-
च्छवद्वन्द्वां देवीं शवहृदि निषण्णां स्मितमुखीम् ।
महाकालेनापि प्रचुरसुरतानन्दनितरां
महाकलीं ध्यायन्नपि भवति मूकोऽपि सुकविः ॥ १० ॥
रजःकीर्णं नार्य्या जपति मदनागारममलं
चिरं स्मारं स्मारं यदि जननि भक्तस्तव मनुम् ।
स जित्वा वादीन्द्राननुपमकवित्वामृतधुनी-
धुरीणः सानन्दं तव चरणलीनः प्रभवति ॥ ११ ॥
निशायामीशानि प्रजपति चितायां यदि जनः
श्मशाने वा बीभिभंगवति ! शवारोहणपरः ।
तदा सर्वां सिद्धिं निजकरतलीकृत्य कुशली
मनोगत्या लोके विहरति महाभैरव इव ॥ १२ ॥
श्मशाने वा शून्ये शवहृदयमारुह्य विकटे
विवासा निश्यर्द्धे निजगलितवीर्याक्तकुसुमैः ।

---

पहिने सब भूषन नीरदसो अति पीन नितम्ब तथा छतिया ।
सिर सेंधुर सोहत चन्दकला विकटा पटु सोह जटा लटिया ॥
विपरीत रती करती सिव संग बनाय शवै अपनी खटिया ।
शवभौन निवासिनि कालिकाको भजिहौं सब साधति जो बतिया ॥ ९ ।
शवके कर काटि करी रशना शव जुग्म लसैं कनकुंडल माँही ।
शवके हृदया पर बैठि निसंक ठठायके हाँसति हैं शव जाहीं ॥
सँगलै महाकालहि सङ्ग करै अतिसै सुरतानन्द मग्न बनाहीं ।
धरि ध्यान बनै सुकवीजन मूकहु कालिका के कछु संशय नाहीं ॥ १० ।
रज परिपूरन सुमिरिकै नारी मदन अगार ।
जपै भक्त चिरकाल लौं जो यह मन्त्र तुम्हार ॥
तो वादीन्द्रहि जीतिकै कविता धुनी प्रवीन ।
होत परम आनन्द जुत तुव पद पंकज लीन ॥ ११ ।
होय निसंक रात में जाई, बैठि चिता पर जपु जो माई ।
मरघट में शव ऊपर बैठी, करै सिद्धि सब निजकर पैठी ॥
वह कुसलो जन मन अनुसारा, भैरव सम बिहरै संसारा ।
मन्त्र प्रभाव प्रकट यह तोरा, बरनि सकै अस को मतिभोरा ॥ १२ ।
सूनसान मरघट में जाई शव छाती पै चढ़िकै ।
होय नग्न निचलाई राती निज बीरज से मढ़िकै ॥

सहस्रैरर्काणां स्मितमुखि जपन्नर्चयति यो
जनस्त्वान्तर्ध्यायन् स इह भुवनानामधिपतिः ॥ १३ ॥
वलिं भूताष्टम्योर्वितरति च लोमास्थिसहितैः
पलैरौष्ट्रैरोतुर्नरमहिषमेषादिभिरपि ।
वशीकृत्य स्वैरं जननि तव भक्तस्त्रिभुवनं
यशो विद्यालक्ष्मीसुखमनुभवत्येष सुचिरम् ॥ १४ ॥
भवेदग्नौ रक्ताम्बुजहवनतस्त्वर्थमतुलं-
भवेद्राज्यं विल्वैररुणकुसुमैर्वश्यमखिलम् ।
रजोभिर्नारीणामपि भवति युक्तैर्हवनतः
सुपत्रैर्विल्वानामपि भवति सिद्धयष्टकमपि ॥ १५ ॥
मातर्दक्षिणकालिके ! तव पदद्वन्द्वारविन्दे रतिं
कृत्वैतत्सरहस्यमद्भुतमिदं स्तोत्रं पठेत् सादरम् ।
तस्य त्वत्करुणाकटाक्षकलया खेलन्ति वक्त्राम्बुजे
कल्लोला इव गद्यपद्यविभवैर्वैदग्ध्यमुग्धा गिरः ॥ १६ ॥

॥ इति श्रीत्रिपाठिरामानन्दशर्मविनिर्मितः श्यामास्तवराजः समाप्तः[1] ॥

---

एक हजार मँदार फूल ते पूजै धरि कै ध्याना ।
होय भुवनपति जग में सोई भगवति भक्त महाना ॥ १३ ।
कृष्ण चौदसी अष्टमी जो वलि देत तुम्हारि ।
सहित लोम अरु अस्थि के मांस कथित पशु मारि ॥
ऊँट मेष पुनि महिष नर अथवा होय बिलार ।
सो जन वस करि लेत है त्रिभुवन मय संसार ॥
कीरति विद्या लच्छमी सब सुख सेवहिं ताहि ।
बहुत काल लों नहिं तजैं रहहिं सदा मन चाहि ॥ १४ ।
लाल कमल के हवन ते होवै अर्थ विशेष ।
बिल्वपत्र ते राज्य अरु अरुन पुष्प वस लेख ॥
नारी-रज-जुत बिल्वदल होम किये ते होत ।
आठहु सिद्धी हस्तगत मन्त्र प्रभाव उदोत ॥ १५ ।
माई दच्छिन कालिके ! मन धरि तुव पदपद्म ।
पढ़ै स्तोत्र अद्भुत यही सब रहस्य को सद्म ॥
तुमरी करुना दृष्टि ते खेलहिं करि कल्लोल ।
गद्य पद्य बानी रुचिर तिहि मुख माँहि अमोल ॥ १६ ।
विरची 'श्यामास्तुति' भली पण्डित 'रामानन्द' ।
'नारायणपति शर्म' तिय किय भाषा सानन्द ॥

॥ शुभं भूयात् ॥

---

१. इस स्तोत्र का मन्त्रोद्धार सहित विशेष विधान नारदीयपुराण के पूर्वभाग में ८५वें अध्याय के आदि से ३४वें श्लोक पर्यन्त सविस्तार वर्णन किया है—[अनुवादक] ।

॥ श्रीगणेशाय नमः ॥

# अथ बगलामुखीस्तवराजः

❀ ❀ ❀

तारां मायां स्थिराख्यां तदनु च बगले नाम सम्बोधितं ते
दुष्टानां सर्वपूर्वं पदमथ शुचि संयोज्य वाचं मुखञ्च।
तस्यान्ते पीतवर्णे! पदपदमुदितं स्तम्भयाथोऽथ जिह्वां
तस्याग्रे कीलयेति द्वयमपि च ततो बुद्धिमित्युद्धरेच्च ॥ १ ॥
तत्पश्चान्नाशयन्ते तदनु च शिवे बीजमोङ्कारमग्ने-
र्जायां संयोज्य मातर्जपति तव मनुं देवि षड्विंशवर्णम्।
हारिद्र्या लक्षमेकं जननि यदि जनो मालया पीतवर्णां
त्वां ध्यायंस्तम्भयन्तीं त्रिभुवनमपि ते किं पुनर्दुष्टमेकम् ॥ २ ॥
पीतस्थः पीतवस्त्रस्तव जननि जनः पीतमाल्येन वीतः
पीतेनैवानुलिप्तः पुनरपि बगले! पूजयेत्पीतपुष्पैः।
पीतस्रङ्मन्त्रजापी भगवति भवतीं पीतवर्णामपर्णां
ध्यायंस्तभ्नाति मातस्त्रिभुवनमखिलं साधकः शुद्धचेताः ॥ ३ ॥
मातस्त्रैलोक्यमेतत्त्रिमधुयुततिलैः साज्यकैर्वश्यभावं
होमादाकृष्टिमेतैः कलयति लवणेनान्वितै रञ्जनानाम्।
तैलाक्तैर्निम्बपत्रैररिगणमचिरादेव विद्वेषभावं
तालाक्ताभिर्निशाभिर्भगवति! बगले स्तम्भनं विद्विषां स्यात् ॥ ४ ॥
आरादागारधूमान्वितमहिपपुरं राजिकाक्तं श्मशाने
हुत्वा वह्नौ चितायां भगवति! बगले साधकस्ते निशायाम्।
यं यं मातः स्वचित्ते रिपुमरुणदृशा सर्वदाऽसौ विधत्ते
तं तं क्षिप्रः स वीरः क्षपयति सततं देवि चन्द्रार्द्धचूडे ॥ ५ ॥

चिता वह्नौ हुत्वा पटुकटुकतैलाक्तसमिधा
बिभीतक्या धूमैरपि च बलिभुग्गृद्धगरुतैः।
जनो यं यं चित्ते तव जननि धत्तेऽचिरमसौ
ध्रुवं तं मातर्द्रुतमिह समुच्चाटयति सः ॥ ६ ॥
गडूचीदूर्वाकां त्रिमधुरयुतानग्निकुहरे
हुते ल्लाजान्मातस्तव मनुभिरेवाम्ब! बगले।
दृशा पश्यन्नेव क्षणमपि नृणां साधकवरः
स रोगानत्युग्रान् श-(ग्रांच्छ-)मयति समस्तानपि शिवे ॥ ७ ॥

नदीसङ्गे शैले यमनियमयुक्तः शिवगृहे
महारण्ये पुण्ये जपति यदि लक्षं तव मनुम् ।
तदा तस्य स्वैरं निजकरतलस्थानगसुते
भवन्त्येते सद्यो जननि बगले सिद्धिनिवहाः ॥ ८ ॥
सवर्णाया धेनोर्मधुमिलितदुग्धं च सितया
समेतं चेत्पीतं त्रिशतमभिमन्त्र्योक्तमनुना ।
अनेनापि नृणां चरमचरमप्याशु बगले
व्रजन्त्यम्ब ! स्वैरं तरलगरलं शान्तिपदवीम् ॥ ९ ॥
अलक्तेनाभ्य-(र)क्ते जननि सितपालाशरचिते
निमन्त्र्योभे लक्षं जननि बगले पादुकयुगे ।
शिलातालं पिष्टं समधुरससंयोजितमुमे
तदारूढो गच्छेद्भगवति नरो योजनशतम् ॥ १० ॥
निमन्त्र्यैतल्लक्षं तदनु च विलिम्पेन्निजतनूं
समन्ताल्लोकानामपि च पुरतस्तत्क्षणमहो ।
क्षणेनापि क्षोणीवलयमटमानस्त्रिनयने
व्रजत्यन्तर्धानं जननि बगले साधकवरः ॥ ११ ॥
षट्कोणं विलिखेन्मनोरनुपमं बीजं हि साध्यान्वितं
तालोन्मत्तनिशाभिरम्ब विशदं शेषाक्षरैर्वेष्टितम् ।
क्षोणीगेहविराजितं तव शिवे सूत्रेण संवेष्टितं
पीतेनैव च यन्त्रकं सुरनुतं प्राणप्रतिष्ठान्वितम् ॥ १२ ॥
भ्राम्यच्चारुकुलालचक्रजमृदा रम्यं वृषं निर्मितं
तन्मध्यस्थितयन्त्रराजममलं पीतप्रसूनैर्जपेत् (यजेत्) ।
एतेन द्विपतां वचोगतिमतिस्तम्भं तवाराधको
मातः श्रीबगलामुखि ! प्रकुरुते क्षोणीतलेषु क्षणात् ॥ १३ ॥
गम्भीरां मदमेदुरां त्रिनयनामुत्तप्तहेमप्रभां
दोर्भिर्मुद्गरपाशशत्रुरसना सद्वज्रकं बिभ्रतीम् ।
राजत्काञ्चनकुण्डलां स्मितमुखीं पीताम्बरोल्लासिनीं
वन्दे तां बगलामुखीं मणिमये सिंहासने संस्थिताम् ॥ १४ ॥
एतं यस्तवराजमन्त्रबगलादेव्याः पठेत्सादरं
मन्त्रोद्धारविचारसारसरसं गूढागमादुद्धृतम् ।
तस्याशु स्वयमेव साधनशतैरभ्यर्थमानाः क्षणा-
त्पूर्वोक्ता अपि सिद्धयः करतले विक्रीडनं कुर्वते ॥ १५ ॥

॥ इति श्रीत्रिपाठीरामानन्दविरचितो
बगलामुखीस्तवराजः समाप्तः ॥

● ● ●

॥ श्रीगणेशाय नमः ॥

# अथ श्रीविन्ध्यवासिनीकल्पद्रुमस्तोत्रम्

❀ ❀ ❀

सच्चिद्रूपां हि केचित्प्रकृतिमथ परे चापरेऽणुस्वरूपां
प्राहुः कर्मेति केचित्क्वचिदपि च जगुर्नेति नेति स्वरूपाम्।
यत्तत्त्वं योगिनोऽपि स्वयमिह न विदुस्तत्त्वगस्त्यादिवाक्यै-
स्तां वन्दे मोहकाशां त्रिभुवनजननीं विन्ध्यशैलेन्द्रवासाम् ॥ १ ॥

यस्याः कारुण्यपूर्णां दिनकरकिरणोत्फुल्लकह्लारदीर्घां
दृष्टिं सम्प्रार्थयन्ते सकलसुरगणा ब्रह्मविष्णुप्रधानाः।
सेयं सर्वासुरेन्द्रप्रकरविदलनोद्दामगर्वादखर्वा
सर्वाभीष्टप्रदात्री त्रिभुवनजननी विन्ध्यवासा शिवा स्यात् ॥ २ ॥

सिंहस्फालोग्रलीला नियमितहृदया निर्दया वैरिवर्गे
घण्टाचापासिशूलाद्यखिलभुजलसद्धेतिभिर्भासमाना ।
गर्जज्जीमूतजालोद्भटविकटमहोदग्रचण्डाट्टहासा
नीलाम्बोदप्रकाशा प्रभवतु सततं शर्मणे विन्ध्यवासा ॥ ३ ॥

अष्टाभिर्दोर्भिरष्टायुधनिवहवहा सिंहपृष्ठे निषण्णा
सोल्लासैस्त्रासयन्ती रिपुगणमचिरात् काममट्टाट्टहासैः।
नानालङ्कारपूर्णा मणिमयविलसत्कुण्डलोल्लासिकर्णा
नीलाम्भोदालिवर्णा प्रभवतु सततं शर्मणे काऽप्यपर्णा ॥ ४ ॥

यद्दोर्दण्डासिधारा गलदसुरवपुर्व्यूहरक्तप्रवाहै-
रभ्यक्ताङ्गी भुजङ्गी भ्रममिह सततं सर्वतः सन्तनोति।
सत्कारुण्यावलोकैर्नयनविलसितैः कल्पितानेकसर्गा
शूलप्रोतारिवर्गा प्रभवतु सततं शर्मणे काऽपि दुर्गा ॥ ५ ॥

मातः श्रीविन्ध्यवासिन्यभिमतजलदश्यामलाङ्गस्त्वदङ्ग-
ध्यानासङ्गादनङ्गप्रतिनिधिरुदितः कामिनीनां मुकुन्दः।
देवोऽसौ वामदेवस्त्रिजगति विदितः कालजित्को विधाता
तत्त्वां गूढात्मतत्त्वां त्रिनयनमहिलां शुद्धतत्त्वां नमामि ॥ ६ ॥

ब्रह्मादिस्थावरान्तं जगदिदमखिलं मोहपाशैस्त्वमेत-
न्मातः श्रीविन्ध्यवासिन्यभिमतफलदे कीलयन्ती विभासि ।
दुर्गे दुर्ज्ञेयरूपा त्वमिह यदबलाऽपि स्वयं विष्णुमूर्ते-
र्नेत्रद्वन्द्वेऽपि निद्रां वितरति सरसां त्वां ततो नौमि निद्राम् ॥ ७ ॥

देवीं त्वां देवदेवीं सकलदिविपदैः पूज्यपादारविन्दां
हित्वा ये त्वन्यदेवप्रकरमिह शिवे भावयन्तो भजन्ति ।
तेऽमी सर्वे पशुत्वं जननि जडधियः प्राप्य भूयोऽपि भूय-
स्त्वद्यागोद्यत्सपर्यास्वपि च कतिपये मोक्षचर्यां चरन्ति ॥ ८ ॥

अव्दे पक्षाब्धिशैलक्षितिभि-(१७४२) रनुपमे श्रावणे मासि रम्ये
पक्षे श्रीमद्वलक्षे शशिनि खलु तिथौ चापि चाद्येऽनवद्ये ।
रामानन्दैः प्रमोदान् "मधुकर"-तनयैः कामनाकल्पशाखी-
त्याख्यामाख्याय विन्ध्यक्षितिधरवसतेः स्तोत्रमेतद् व्यधायि ॥९॥

॥ इति श्रीमत्सरयूपारीणपण्डितधुरीणमहाकुलीनत्रिपाठिमधुकरशर्मात्मजत्रिपाठि-
रामानन्दशर्मभिर्विरचितं विन्ध्यवासिनीकल्पद्रुमस्तोत्रं समाप्तम् ॥



॥ श्रीगणेशाय नमः ॥

# अथ देवीस्तवराजः

❀ ❀ ❀

हरिपृष्ठनिषण्णे हिमगिरिकन्ये जलधरवर्णे दत्तवरे
विविधायुधधारिणि दानवदारिणि भवभयहारिणि बुद्धिपरे ।
महिषासुरमर्द्दिनि सुघटकपर्द्दिनि सुखवर्द्धिनि वर्द्धय सुचिरं
खण्डितरिपुवर्गे विरचितसर्गे जय जय दुर्गे देवि चिरम् ॥१॥
नवजलधरकल्पे विगतविकल्पे कृतसङ्कल्पे कल्पलते
तुहिनाचलनन्दिनि भवभयभञ्जिनि जनरञ्जिनि जगदीशनते ।
कामितफलसिद्धे परमविशुद्धे सुकृतसमृद्धे तव शरणं
दानवकुलनाशिनि गिरिशविलासिनि विन्ध्यनिवासिनि पाहि जनम् ॥२॥
धृतकरकरवाले हिमकरभाले हिमगिरिबाले वलयकरे
सिंहासनयाने जलदसमाने सुकृतनिदाने दुरितहरे ।
दानवकुलखण्डिनि त्रिभुवनमण्डिनि तव पदपङ्कजशरणगतं
विन्ध्याचलवासिनि गिरिशविलासिनि भयनाशिनि मामव सततम् ॥३॥
जगतामसि माता हरिहरधात्रा ज्ञाता नो परमप्रकृतेः
तव नयनविजृम्भणजनितविजृम्भणभुवनविजृम्भणकृतविकृतेः ।
वियदादिरनादिर्वियदि वसादिर्विपदादिव्यवहारपरे
दुर्गे श्रुतिगीते परमपुनीते पाहि वराभयजुष्टकरे ॥४॥
गुणजनितविकारे गुणगणपारे त्रिभुवनसारे सुकृतवशे
विदधिष्ठितसत्त्वे चेतनसत्त्वे चित्सत्त्वेन चिदेकरसे ।
पञ्चाननपृष्ठे सपदि निविष्टे त्रिदशवरिष्ठानतचरणे
दर्पितदुर्गा-सुरहृतवलदुर्गे कुरु दुर्गे दुर्गतिहरणम् ॥५॥
जगदादिकुमारी त्रिपुरविदारी वरनारीजनदत्तवरा
निष्कलपदबद्धा परमविशुद्धा सुमतिविशुद्धा बुद्धिपरा ।
विविधायुधहस्ता जलधरशस्ता शमितत्रस्ता सस्मितवदना
प्रभवतु शुभकर्त्री किल्विषहर्त्री विन्ध्यमहीधरकृतसदना ॥६॥
अत्यरुणदुकूलावृतकटिमूला करधृतशूला हतमहिषा
अट्टाट्टविहासा जलदविकाशा दनुजविनाशानलविशिखा ।
केशर्य्युपरिष्टादभृशमुपविष्टा रणधृष्टा सुरकुलविकटा
पायादरिवर्गा क्षपितविसर्गा रणदुर्गा हतसमरभटा ॥७॥

जलदद्युतिविमला वरकरकमला विकसितकमलाननकमला
विधुखण्डविमण्डितपट्टविधिपण्डितवरघटितालिकचन्द्रकला ।
भुजपरिघविलम्बितकनकमयाङ्गदघटितमणिप्रकरैर्वलिता
कलयतु मम भद्रं किमपि समिद्धं हरतु दरिद्रं हरवनिता ॥८॥
मणिपीठविचित्रे परमपवित्रे कनकविचित्रे मणिभवने
कृतनियतनिवासे जलधरकाशे कल्पद्रुमनिकरोपवने ।
सुरपतिमुखसुरवरसनकसनन्दनमुनिगणसेवितपदकमले
विन्ध्याचलवासिनि दनुजविनाशिनि जय जय मातर्भुवनतले ॥९॥
प्रणवस्त्वं दुर्गे दुर्गे रक्षिणि वह्निवधूरसि मखनिखरे
तव जननि सुमन्त्रं जपति पवित्रं वितर विचित्रं किमपि परे ।
मधुकरसुतरामानन्दनिबद्धं तवगुणनद्धं हरकमले
पठतस्तवराजं कुरु कविराजं सम्राजं कुरु वशममले ॥१०॥

॥ इति श्रीत्रिपाठिरामानन्दशर्मविरचितो देवीस्तवराजः समाप्तः ॥

॥ शुभम् ॥

● ● ●

॥ श्रीगणेशाय नमः ॥

# अथ रुद्रताण्डवम्

* * *

विलोलबाहुवल्लरी नखक्षतेन्दुमण्डल-
स्रवत्सुधाम्बुजीवितस्रगट्टहासपेशलम् ।
झणज्झणज्झणज्झणज्झणज्झणज्झण-
ज्झणज्झणेति ताण्डवं मुदे ममास्तु शाम्भवम् ॥ १ ॥

विदग्धभावकिन्नरी सुरेशसद्मसुन्दरी
नदन्मृदङ्गझल्लरी सुशंखगोमुखादिभिः ।
धईयतत्ततद्धईयतत्ततद्धई-
धईधईति चण्डताण्डवं मुदे ममास्तु शाम्भवम् ॥ २ ॥

अमन्दमोदमानमानसोग्रसिद्धिसाधक-
स्फुरन्मृदङ्गवल्लकीपिशाचताललालितम् ।
डिमिं डिमिं डिमिं डिमिं डिमिं डिमिं डिमिं डिमिं डिमिं
डिमिं डिमीति ताण्डवं मुदे ममास्तु शाम्भवम् ॥ ३ ॥

प्रमत्तभूतडाकिनी पिशाच यक्षशाकिनी-
गणो यदट्टगर्जिते जपत्यभीतिहेतवे ।
विभो गिरीश रक्ष रक्ष रक्ष रक्ष रक्ष मा-
मिति प्रचण्डताण्डवं मुदे ममास्तु शाम्भवम् ॥४॥

भ्रजिष्णुविष्णुपद्मयोनिमुख्यदेवतास्फुर-
त्स्फुरत्सुवाद्यविभ्रमोल्लसत्सहेति सद्भुजम् ।
पिशाचभूतरक्षसां ठठं ठठं ठठं ठठं
ठठं ठठेति ताण्डवं मुदे ममास्तु शाम्भवम् ॥५॥

क्वचित्सुशंखवादितं क्वचिन्मृदङ्गनादितं
क्वचित्सुदुन्दुभिस्वनं क्वचित्सुवंशनिःस्वनम् ।
क्वचिच्च घोरभेरिकं भभं भभं भभं भभं,
भभं भभेति ताण्डवं मुदे ममास्तु शाम्भवम् ॥६॥

स्फुरत्सुकालकूटकं लसत्कदर्पजूटकं
भुजङ्गभोगमण्डनं मनोजमानखण्डनम् ।
यदष्टमूर्तिरूपकं ततं ततं ततं ततं
ततं ततेति ताण्डवं मुदे ममास्तु शाम्भवम् ॥७॥

यदीयनामजल्पने विभाति रामसत्पदं
ततोऽपि नन्दनिर्मितं स्वरद्वितीयवर्मितम् ।
इदं हि रुद्रताण्डवं मुदामुनैव जल्पितं
पठन्ति ये लभन्ति ते वरं परं महेशितुः ॥८॥

॥ इति श्रीत्रिपाठिरामानन्दशर्म्मनिर्मितं रुद्रताण्डवं समाप्तम् ॥

• • •

॥ श्रीगणेशाय नमः ॥

# अथ चतुर्भुजाष्टकम्

❀ ❀ ❀

चिरं विरञ्चिवासवादयो यदीयवैभवं
विदन्ति नारदादयो न वापि किन्नरादयः ।
तमेकमप्यनेकदुष्टनाशने हविर्भुजं
भुजङ्गपीठशायिनं भजे विभुं चतुर्भुजम् ॥ १ ॥

गृहीतमत्स्यकूर्मयौग्रिनारसिंहवामन-
स्वरूपतोऽप्यनेकरामबुद्धिकल्पितम् ।
स्वभक्तरक्षणाय दुष्टनाशने हविर्भुजं
भुजङ्गपीठशायिनं भजे विभुं चतुर्भुजम् ॥ २ ॥

नवीननीरदच्छविवपुर्गृहीतकच्छपं
कपीन्द्रबद्धसौहृदं रमाविलासवल्लभम् ।
पलादपादपस्फुरन्महाहवे हविर्भुजं
भुजङ्गपीठशायिनं भजे विभुं चतुर्भुजम् ॥ ३ ॥

स्फुरद्विलोलकुण्डलं प्रगल्भगण्डमण्डल-
ज्ज्वलत्किरीटमण्डितं कृपापयोधिपण्डितम् ।
गदासिभासितं भुजैश्चतुर्भिरिभ्यवर्चसं
भुजङ्गपीठशायिनं भजे विभुं चतुर्भुजम् ॥ ४ ॥

अरिष्टकेशिपूतनाप्रलम्बधेनुकार्दनं
विदुर्यमादिशोभितं तमच्युतं जनार्दनम् ।
तमिष्टमिष्टदायकं रमामुखेन्दुनायकं
भुजङ्गपीठशायिनं भजे विभुं चतुर्भुजम् ॥ ५ ॥

सुरुक्मपीतवाससं वसानमम्बुजेक्षणं
सुवन्यमालयावृतं पयोदसान्द्रवक्षसम् ।
युतं च सत्यभामया स्तुतं गरुत्मना स्वयं
भुजङ्गपीठशायिनं भजे विभुं चतुर्भुजम् ॥ ६ ॥

अनन्तमीशमच्युतं मुकुन्दमव्ययं हरिं
मुरारि मे तदष्टकस्तुतं सुरैर्निरन्तरम् ।
श्रियान्वितं कृपास्तुतं सुभद्रया युतं प्रभुं
भुजङ्गपीठशायिनं भजे विभुं चतुर्भुजम् ॥ ७ ॥

इदं चतुर्भुजाष्टकं पुरेसि कन्दरस्य वै
गुणाक्षिसागरेन्दुभिर्मिते सुराख्यविस्तरे ।
कृतं हि मासि फाल्गुने हितं सुसंस्कृतं हि यः
पठेत्स भुक्तिमुक्तिभाग्भवेच्च वाक्पतिर्ध्रुवम् ॥ ८ ॥

॥ इति श्रीमत्सरयूपारीणपण्डितधुरीणमहाकुलीनसकलचमत्कारविद्यापारंगतशाण्डिल्य-
गोत्रजत्रिपाठ्युपनामकश्रीमधुकरसत्सन्तानश्रीत्रिपाठिरामानन्दशर्म्म-
विनिर्मितं चतुर्भुजाष्टकं समाप्तम्[1] ॥

॥ शुभं भूयात् ॥

---

१. श्रीमत्त्रिपाठिकुलपद्मपतङ्गरामानन्दा-
मिधान्वय इह क्षितिदेवमान्यः ।
सत्कीर्त्तितोऽवनितलेऽधिगतप्रतिष्ठो
नाम्ना रमापतिरसावजनिष्ट धीमान् ॥ १ ॥
नारायणपतिना श्रीरमापतेः सूनुनाऽथ संशोध्य ।
स्तोत्रत्रयं प्रकाशितमेतल्लोकोपकारकं कृतिना ॥ २ ॥
॥ इति शुभं भूयाज्जगतः ॥

• • •

# परिशिष्टम्–२

## विराड्विवरणस्थसूत्राणां वर्णानुक्रमसूची

• • •

# परिशिष्टम्—३

## विराड्विवरणस्य स्वोपज्ञवृत्तौ निर्दिष्टानां ग्रन्थानां ग्रन्थकर्तॄणां च वर्णानुक्रमेण नामानि



• • •

# सुसंग्राह्याः

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयसरस्वतीभवनपुस्तकालये संरक्षितानां हस्तलिखितपाण्डुलिपीनां विवरणपञ्जिकाः

## (Descriptive Catalogue of the Manuscripts)

| ग्रन्थनाम | मूल्यम् |
|---|---|
| १—विवरणपञ्जिका (प्रथमः खण्डः)—खण्डेऽस्मिन् वेदोपनिषद्विषयिणीनां पाण्डुलिपीनां परिचयात्मकं विवरणं प्रदत्तम्— | ३-२५ |
| २—विवरणपञ्जिका (प्रथमखण्डस्य द्वितीयो भागः)—खण्डेऽस्मिन् उपनिषद्विषयिणीनां पाण्डुलिपीनां परिचयात्मकं विवरणं प्रदत्तम्— | २-०६ |
| ३—विवरणपञ्जिका (द्वितीयखण्डस्य प्रथमो भागः)—खण्डेऽस्मिन् कर्मकाण्डविषयिणीनां पाण्डुलिपीनां परिचयात्मकं विवरणं प्रकाशितम्— | २-५० |
| ४—विवरणपञ्जिका (द्वितीयखण्डस्य द्वितीयो भागः)—अस्मिन्नपि खण्डे कर्मकाण्डविषयिणीनां पाण्डुलिपीनां विवरणं प्रकाशितम्— | २-०० |
| ५—विवरणपञ्जिका (तृतीयः खण्डः)—खण्डेऽस्मिन् धर्मशास्त्रविषयिणीनां पाण्डुलिपीनां विवरणं प्रकाशितम्— | ४-३० |
| ६—विवरणपञ्जिका (चतुर्थः खण्डः)—खण्डेऽस्मिन् पुराणेतिहास-श्रीमद्भगवद्गीताविषयिणीनां पाण्डुलिपीनां परिचयात्मकं विवरणं प्रकाशितम्— | ६-२५ |
| ७—विवरणपञ्जिका (पञ्चमखण्डस्य प्रथमो भागः)—खण्डेऽस्मिन् स्तोत्रसाहित्यविषयिणीनां पाण्डुलिपीनां सपरिचयं विवरणं प्रकाशितम्— | ७-२५ |
| ८—विवरणपञ्जिका (पञ्चमखण्डस्य द्वितीयो भागः)—अस्मिन्नपि खण्डे स्तोत्रसाहित्यस्य परिचयात्मकं विवरणं प्रकाशितम्— | ७-२५ |
| ९—विवरणपञ्जिका (षष्ठः खण्डः)—खण्डेऽस्मिन् तन्त्रशास्त्रविषयिणीनां पाण्डुलिपीनां विवरणं प्रकाशितम्— | ६-०० |
| १०—विवरणपञ्जिका (सप्तमः खण्डः)—खण्डेऽस्मिन् सांख्य-योग-मीमांसा वेदान्तादि-विषयिणीनां पाण्डुलिपीनां परिचयपुरःसर विवरणं प्रकाशितम्— | ७-०० |
| ११—विवरणपञ्जिका (अष्टमः खण्डः)—खण्डेऽस्मिन् न्याय-वैशेषिकदर्शनविषयिणीनां पाण्डुलिपीनां परिचयात्मकं विवरणं प्रकाशितम्— | ८-५० |
| १२—विवरणपञ्जिका (नवमः खण्डः)-खण्डेऽस्मिन् ज्योतिषशास्त्रविषयिणीनां पाण्डुलिपीनां परिचयात्मकं विवरणं प्रकाशितम्— | ७-५० |
| १३—विवरणपञ्जिका (दशमः खण्डः)—खण्डेऽस्मिन् व्याकरणशास्त्रविषयिणीनां पाण्डुलिपीनां विवरणं प्रकाशितम्— | ६-०० |
| १४—विवरणपञ्जिका (एकादशः खण्डः)—खण्डेऽस्मिन् साहित्यशास्त्रविषयिणीनां पाण्डुलिपीनां विवरणं प्रकाशितम्— | ८-५० |
| १५—विवरणपञ्जिका (द्वादशः खण्डः)—खण्डेऽस्मिन आयुर्वेद-शिल्पशास्त्र-संगीतशास्त्र-नीतिशास्त्र-धनुर्वेदशास्त्र-जैनभक्तिसम्प्रदाय-देशीभाषाप्रभृतिविषयिणीनां पाण्डुलिपीनां विवरणं प्रकाशितम्— | ८-०० |
| १६—एतासामग्रेऽपि विवरणपञ्जिकाया चतुर्दशखण्डा मुद्रितप्रायाः, येषां प्रकाशनं शीघ्रमेव भवितेति— | |